अ. पु. अनिषिध पुत्र सुखानुरागो जातः॥ न मया पूर्वमनुभूतं पुत्रसुखं॥ एवं वै. रा

टि सति इदानीं ममेपत्येच्छा॥ मामपत्या निकास्युः॥ अहमपि मां पुत्रने १.

दं न्…॥ अशोकतोक सुखमात्रमनुभवेयमिति एतदिच्छाया अपि विषय सिद्धौ विषयानुराग जातीय सर्वस्व निवृत्तौ वैराग्यस्या निराय पनिपाकः स्यादिति तत्कारणं वदति॥ यदा सर्वे प्रमुच्यंत कामा येस्य हृदि स्थिताः॥ अथ मर्त्योऽमृतो भवति अत्र ब्रह्म समस्तुते॥ यदा सर्वे प्रभिद्यंते – दमस्येह ग्रंथयः॥ अथ मृर्त्योमृतो भवति एतावदनुशासनं इति॥ अथ प्रजा दितेच्छया परदुःख प्रहाणेच्छा नरूप परमदयाकुर्जनकः प्रजानां बहून्न प्रा – साधन विश्वंभरा प्रसादेपा – पृच्छति॥ बहुधान्य मित्यादिना वदे संनेन॥ भो पुनो दित। स्वयमेव व्यवसायाद्याया संविता॥ स्त्री त्माकृष्येति यामे नाष्टं॥ बहुधान्यं बहुलं॥ केनोपायेन साधनेन भूयादितीच्छामेस्ति॥ तत्कारणं लक्ष्मी संपत्कारणं॥ चतुर्थं पृच्छामि। तदुद्देसर्पः॥ इत्थं च धर्मज्ञान वैराग्य संपत्साधनानि पृष्टानीति ध्येयं॥ २९॥ अथ शतानंदः मंदभाग्यानां ब्र – नुग्रहो च्छिनातमसतां प्रतिबद्धेष्ट प्रारब्ध शेषः स्वप्ने जाग्रति च मनोनये जाड्ये च चित्तमोहे वा वातगतौ वा उन्मदज विकारे वा भ्रांतौ वान्यत्र इति शिथिलो जायते प्रतिबन्धानिष्ट प्रारब्ध शेष संभोगस्तु जागनित एव लंबायमान उत्कटो जायते सुकृतिनां दुर्यनुग्रह पात्राणां सात्विकानां तु प्रतिबद्धेष्ट प्रारब्ध शेष संभोगो जागनित एव लंबायमानः स्फुटो जायते अनिष्ट प्रतिबन्ध प्रारब्ध शेष संभोगस्तु स्वप्न मनोनयादावल्पो नुत्कट इति कर्मविपाक विदां मतं तथा चायं स्वप्नः प्रतिबन्धानिष्ट प्रारब्ध संभोग रूपो न भाव्यनिष्ट सूचकः किंतु शुभ सूचनायैव तस्मात्तदातंकं त्यज यत्र्च नावणादि निमित्तातंक चिंता कारणादिक मुक्त्वा तन्निवृत्ति कारण धर्मज्ञान वैराग्य संपत्साधन चतुष्टयं पृष्टं।

> श्लो अस्ति कश्चिद्विशेषोस्मिन्भूलोके भूमिपालक॥ दुहितुस्तव कल्याणं सुखदं शत्रुनाशनं॥ २८॥

तत्साधनं दिग्वत्सवेदनं इति सूचयन्निर्गुण भेदेन नाम चतुष्टय प्रवृत्ति निमित्त चतुष्टय माह॥ अस्ति कश्चिद्विशेष इत्यादिना ऽध्यायतेन॥

भा.पु दिग्वत्स विद्याच ॥ अंतरिक्षोदरः कोशो भूमिर्बुध्नो न जीर्यति दिशो ह्य वें-मा
स्य स्रक्तयो द्यौरस्योत्तरं बिलं स एष कोशो वसुधानस्तस्मिन्विश्वमि १
दं श्रितं तस्य प्राची दिग्जुहूर्नाम सहमाना नाम दक्षिणा राज्ञी नाम प्रती
ची सुभूता नामोदीची तासां वायुर्वत्सः स य एतमेवं वायुं दिशां वत्सं वेद
न पुत्ररोदं रोदिति सोऽहमेतमेवं वायुं दिशां वत्सं वेद मा पुत्ररोदं रुद
मरिष्टं कोशं प्रपद्ये मुनामुनेत्यादि ॥ सूचनप्रकारश्च तत्तन्नामप्रवृत्ति
निमित्तकथनेन प्रदर्श्यते । भूमिपालक । भूपाल । अस्मिन्भूलोके ।
भरतखंडात्मके कश्चित् । एकः विशेषः सामान्यदुहितुर्विद्यते यो विद्व
द्विहेयं नहस्य धर्मः । तत्पति पादको पि तथा । अस्मिन् लक्ष्मण विषये
- - रूपोऽस्तीत्यर्थः (र्थः) ॥ सक इत्यत आह । दुहितुनित्यादिना दो
ग्धि मात्रादि मनोरथान् पूरयतीति दुहिता शीता एतस्या एवांशावता
नरूपायाः पद्मावत्याः ॥ वैकुंठागतत्वेन वैकुंठाद्रिरिति स्मृत इति वच
नात् वैकुंठगिरिनयं । तदुक्तं वराहे -- ती यो ध्याये ॥ ननु शेषमारुत संवादा
दागतोयं हेमगिरिनंदन इति प्रसिद्धेः कथमुच्यते वैकुंठादागत इतिचेत्
इत्थं श्वेतकोल निवासाय वैकुंठादागतो प्राकृतस्तेजोमय इदानीं दे....
गिरिनंदनेन तर्थायांतः सन्निहितो यथानन्यामनसी सुतः । तस्य माहा
त्म्यं माहात्म्य प्रतिपादकं स भविष्यं यस्मिन्नाख्याने यद्देशे स्वमुख्य
विषयस्य मानुषान्प्रति साक्षात्संभाष .... भावरूपादैवीस्थितिः ।
स्वमुख्यावतारप्रयोजनस्य यत्प्रधानांगं तस्य यस्य कस्यचित्पनगति
र्वोच्यते तद्देकदेशाख्यानं भविष्यं । यद्भविष्यो दैवपन इत्यत्र भविष्य
शब्दस्य दैवे प्रयोगात् ॥ पनगतेर्दैव व्यापारत्वात् । भवितव्ये भवतेः
स्यन् अत्र च स्वमुख्यविषयस्य श्रीनिवासस्य साक्षात्कलि मानुष
संभाषणाय भावस्य साक्षात्संभाषणं नास्तीत्यादिनावश्यमाणत्वा(त्)॥
प्रधानांगस्याकाशराजमानस्यैकादशाद्बौ प्रयोदशांते पनगते रुक्त
त्वात् । यद्वा भविष्यच्छब्दपर्यायो भविष्यशब्दः । स्वमुख्यविषय
स्य अवतारनाय यद्देवानां प्रार्थनं तद्भूतं ॥ यदवतारकृत्यं तद्वर्तमानं ॥
ग यदवतारसमाप्तौ स्वर्गमानादि तद्भविष्यं तेन सहितं । सहोत्तरं ।
यदाख्याने यद्देशे विषयेण पनतत्वेनाभिव्यक्तिः । तदुत्तरं । तथाचात्र
ग्रयोदशे श्रीनिवासस्य प्राचुर्येण सर्वोत्तमत्वाभिव्यक्तेः । यद्वा
पूर्वग्रन्थे मोहकप्राचुर्यतत्वा वेदकात्म्यत्वा भयां अभयविधवाक्य

ग.पु. ज्ञानत्याद्ज्ञान विपर्यय संशये जाता क्षेपस्योन्तन रूपत्वादुन्त जें.मा.
मार्थत्वादुन्तनत्वाच्चोन्तनं ॥ तेन सहितं । यद्वा तव दुहितुः शीतायाः 1.
स भविष्यं । भविष्यत्सद्भावतान कल्याण सहितं । अथवा प्रायो भ
विष्यद्र्थे प्रश्नः । अतः सप्रश्नोन्तनं ।

वेंकुंठगिरि माहात्म्यं स भविष्यं सहोन्तनं ॥२६॥

यद्वा भविष्यतीति प्रवृत्तत्वात् सभविष्यं पूर्वकालिकं जनकं प्रति कलिकालिक श्रीनिवास कल्याण कथाया भविष्यत्वात् । अत एव वक्ष्यंति । नाम भविष्यतीत्यादि प्रयोगः । अस्य भविष्योन्तनत्वं नामायण वर्धेयं । सुखदं कीर्तन श्रवणाभ्यां उभयोर्लोकयोः सुखसाधनं । शतृ नाशनं बाह्याभ्यंतरानि क्षयकानि कल्याणं पद्मावती कल्याणाख्यान रूपं एतदात्मा कश्चिद्विशेषोस्तीति पूर्वेणान्वयः ॥२५॥

एतत्वदिष्ट चतुष्टय साधनमिति ॥ कलहेत्य युगे कलिनिति वचनात् धर्माऽधर्मयोः ज्ञानाज्ञान संशय विपर्ययमयो विनाशानुनाशयोः संपदापद्योः पनस्पनं कलहे । सर्वकलहास्पदे कलौच तत्कीर्तनं यः कल्याणाख्यान रूपः कश्चिद्विशेषः । तस्य कीर्तनं कीर्तनादि पुण्यं धर्म साधनं ज्ञानिनो ज्ञानयोग्यस्य सर्व दुःखहनं सर्व चिंता संताप हनं । शिवं विघ्नभेषजं । धन.
धनकामस्य धनदं संपत्प्रदं श्रोतु श्रवण आदरातिशय जननाय दृष्टापदानत्वमाह ॥ यां श्रुत्वेत्यानभ्य संक्षिपे मह्योसंतेन । किमुक्तेनेति विशेषेण स्व विभाजकोपाधि रूपेणोक्तेन फलेन किं साध्यमस्तीति शेषः ॥ तत् तस्मात् । तत् संक्षिपे महि । उपसंहरे महि । तव श्रोतुः श्रवणादनस्य स्वतः सिध्दत्वादिति भावः ॥ अत्रेदमनुसंधेयं । अस्य कल्याण
महान् कांडस्य वेदव्यासो मान् ऋषिः । महालक्ष्मी नादि ऋषिः । शतानंदाद्य अनंतन ऋषयः । श्री श्रीनिवासो देवता । यथोचितं छंदांसि धर्म ज्ञान वैनाग्य संपदर्थे कीर्तन श्रवणादौ विनियोगः । व्यासेनामित तेजसेत्युक्तेः । महालक्ष्मी दृष्ट दिव्यत्स विद्याभाष्य रूपत्वादुक्तर्षिकत्वं युक्तं ॥ वृषनाम्नि धर्म तत्प्रवर्तक चक्रयोर्माहात्म्य कथनात् । अंजन नाम्नि ज्ञानादि देव … वायु माहात्म्य कथनात् । शेषनाम्नि वैनाग्याधि देवता शेषनि
श्री गर्वं कथनात् । पक्षीन्द्रस्यैव शेषत्वात् । वेंकट नाम्नि पद्मा प्रसंगादुक्त फलकत्वंच युक्तमिति ॥२२॥

भ.पु. कलौ तत्कीर्तनं पुण्यं सर्वदुःखहरं शिवं ॥ धनकामस्य वें.मा
धनदं ज्ञानिनो ज्ञानसाधनं ॥२७॥ यां श्रुत्वा सर्वलोकेशो १
ब्रह्मा ब्रह्मपदं गतः ॥ नीलकंठस्तु यां श्रुत्वा निर्विषः सुख-
माप्तवान् ॥२८॥ वज्री नाकपदं प्राप्तो यत्कथाश्रवणा-
दनात् ॥ किमुक्तेन विशेषेण तत्फलं संक्षिपेमहि ॥२९॥
इत्युक्तो मुनिनाथेन जनको वाक्यमब्रवीत् ॥३०॥

अंतरिक्षोदरः कोशो भूमिबुध्नो नजीर्यति दिशो ह्यस्य स्रक्तयो द्यौरस्यो-
त्तरं बिलं स एव कोशो वसुधानस्तस्मिन्विश्वमिदं श्रितं तस्य प्राची दि-
ग्जहूर्नाम सहमाना नाम दक्षिणा राज्ञी नाम प्रतीची ... सुभूता नामोदीची
तासां वायुर्वत्सः स य एतमेवं वायुं दिशां ... वेद न पुत्ररोदं रोदिति सोऽह-
मेतमेवं वायुं दिशां वत्सं वेद मा पुत्ररोदं रुदमरिष्टं कोशं प्रपद्ये मुना
मुना मुना प्राणं प्रपद्ये मुना मुना मुना भूः प्रपद्ये मुना मुना मुना भुवः
प्रपद्ये मुना मुना मुना स्वः प्रपद्ये मुना मुना मुनाथ यदवोचं प्राणं प्रपद्य
इति प्राणो ह्वा इदं सर्वं भूतं यदिदं किंचतमेव तत्प्रापत्स्यथाथ य-
दवोचं भूः प्रपद्य इति पृथिवीं प्रपद्येंतरिक्षं प्रपद्ये दिवं प्रपद्य इ-
त्येव तदवोचमथ यदवोचं स्वः प्रपद्य इत्यृग्वेदं प्रपद्ये यजुर्वेदं प्रपद्ये
सामवेदं प्रपद्य इत्येवतदवोचं तदवोचम् ॥

दिग्वत्स विद्यातात्पर्यार्थस्तु आनंदैकस्वरूपस्य अंतरिक्षकुक्षेर्भू-
पादमूलस्य द्युशीर्षस्य सर्वदेवतावसुधानस्य सकलजगदाधानस्य
भगवतो विष्णोर्धर्मज्ञानवैराग्यसंपदति देशानात्प्राच्यवाचीप्रती-
च्युदीची दिङ्नामकानां तदाश्रयाणां धृतनयचनणाब्जगदाब्जानां
जुहूसहमानाराज्ञीसुभूताभिधानानां क्रमाद्दक्षिणवामोर्ध्वाधः-
स्रक्तीनां वायुर्मुख्यप्राणोवत्सस्तदुपासकानां नंदनंदनतत्परा बह-
वो नंदना आनंदना एव जायंते तेच मुक्ता भवंतीत्यैहिकामुष्मिक-
फलमुच्यत इति ॥ चतुर्युगेष्विति ॥ हे मुने । चतुर्युगेषु मध्ये । तस्य गिरेः ।
कृते वृषाद्रिमिति कृते वृषाद्रिं वदंतीति । अनेन अर्थाद्वृषाद्रिरिति यन्नाम
प्रोक्तं तच्च कलौ नामकथं भविष्यतीत्यन्वयः ॥ पूर्वत्र वैकुंठगिरिरित्येक-
नाम्नैव व्यवहार इति भावः । नरघ्न कर्मकृत् । अप्रिय तपः कर्ता नरसकल
प्रेष्य चिकुर इत्यमनः । यथ मुखनाः नेत्रयोः धूळिं प्रक्षिपंत्यं गुल्मादिकं

धिं द्रतीष्ट सिध्यै तद्वदिति भावः। दया क्षमानसूया च शौचानायास
मंगलं। अकार्पण्यं चास्पृहत्वं सर्वसाधारणानि नित्युक्त सर्वसाधारण
तपोऽष्टांगमध्यगणितयोः। शरीरं पीड्यते येन सुशुभेनापि कर्मणा।
अत्यंतं तन्न कर्तव्यमनायासस्स उच्यते॥ प्रशस्ताचरणं नित्यमप्रशस्तवि
वर्जनं। एतद्धि मंगलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिरित्युक्त लक्षणयोगना
त्या समंगल···· भावात्। अतिबाधयत् अत्यंतं पीडामकरोत्। पीडाबाधा
व्यथा दुःखमित्यमरः। बाधाशब्दात्करणे णिच्। जनमेजयादींश्चतुरस्तस्या
मुत्पादय···· तानित्यादिवद्डा भाव आर्षः। विज्ञापयन् विज्ञापनं चक्रुः॥२६॥
तपस्विनां विज्ञापनप्रकारमाह॥ भगवन्नित्यादिना॥ शठः। अनृजुः। सद्यस्ताप
सानबाधयत् अतस्त्वां तद्वधे वयं शरणं गताः इति शेषः॥ बाढमित्युक्तवान्।
रक्षामीति भृशं प्रतिज्ञां कुर्वन्नेवेति शेषः॥

जनकः॥ चतुर्युगेषु यत्प्रोक्तं नामतस्य गिरेर्मुने॥ कृते वृषाद्रि
रितिच कथं नाम भविष्यति॥२३॥ शतानंदः॥ पुनातु वृषभो नाम
राक्षसो क्रूरकर्मकृत्॥ आक्रम्य शेषशैलंच तापसानतिबाध
यत्॥२४॥ तापसास्तेन संक्रुद्धास्तद्वधे शरणं गताः॥ श्रीनिवा
सं हृषीकेशं भक्तानामभयंकरं॥२५॥ तुष्टुवुर्हृष्टमनस श्रेष्ठं
सर्वचेतसां॥ प्रादुर्बभूव भगवान्मुनीनां पुरतो हरिः॥ विज्ञापय
न्मुनिश्रेष्ठास्तस्य कृत्यं कृतस्तवाः॥२६॥

स राक्षसः कुत्र कीदृशं क्रूरं कर्म कियंतं काल···· नासीदिति राज्ञो मान
सीं शंकां अपहृदति। स राक्षस इत्यादिना विगतानि चेत्यंतेन। भो महा
राज स राक्षसो वृषभ नाम तुंबुरु संज्ञके तीर्थे नित्यं अनघं। स्त्रता
वनां लक्षणोत्तमां। पुण्यं बहुजन्मार्जित पुण्यलब्धां तत्साधनमूलां वा।
सकलाक्षो दृष्ट्वा दंतुरवदनान्वितां। दिव्यां देवदुर्लभां। नरसिंहात्मिकां
नृसिंहप्रतिमारूपां। शालग्रामशिलां। पूजांते संकल्पित पूजापरिस
माप्तौ स्वशिरः पुष्पं। कंठनालमुखांबुजं। खड्गेनाहृत्य आहरणं कृ
त्वा देवाय समर्पयित्वा नित्यं देवमाराधयेत्॥ पुनः पूजा देवचिन्ते स्थिता
चेत्तच्छिरः पुनरागतं भवतीति निश्चित्य दृढनिर्बंधं कृत्वाऽधोमुखः।
दिशो न वलोकयन्। सततं देवमाराधयन्नासीदिति शेषः॥

वें.मा. आराधयेदिति पाठे आराधयन्निति शेषः। समर्पयित्वेत्यस्य वंशं कुर्वन् शाद्रक्ताग्निनाहृतं संनोद्ययित्वा भवतापनो हृनि नित्यत्रे वार्षत्वाद्वाण्यं नास मर्पि धातोः क्त्वा वाहनिं वंदंतीति समर्पयित्वेत्यत्रेव साधुत्वं ज्ञेयं ॥४१॥ तस्मिन्काले पूजांते शिवः पुष्पसमर्पणात्पूर्वं ॥ विसंज्ञमिति ॥ संज्ञया श्चेतनया अभावो विसंज्ञं। अर्थाभावेऽव्ययीभावः मूर्छामिति यावत्। क्रियाविशेषणं वा। दृष्टसिद्धा महाघोरतपो भारपनि खिन्नतया प्रायः शिथिल बाह्यानां बाह्येंद्रियाणां निमीलनात् मनस आभ्यंतरी मध्यमवृत्तिरूपा मूर्छा जातेत्यर्थः। अत्रेयं मामकीयो त्रैश्लोकी परीक्षा ॥

मुनयः ॥ भगवान्नन विंशाक्ष वृषभो नाम राक्षसः ॥ अबाधयत्सदा क्रूरो तपोभंगकरः शठः ॥३७॥ तस्माद्रक्ष जगन्नाथ भयाद्राक्षस कल्पितात् ॥ बाढमित्युक्त्वा कृष्णो दुष्टमभ्यद्रवद्रुषा ॥३८॥ स राक्षसो महाराज तीर्थे तुंबुरुसंज्ञके ॥ स्नात्वा नित्यं वरां पुण्यां शालग्राम शिलां नृप ॥३९॥ नारसिंहात्मिकां दिव्यां सकनात्कामधो मुखः ॥ नित्यमाराधयेद्देवमिति निश्चित्य राक्षसः ॥४०॥ पूजांते स्वशिनः पुष्पं खड्गेन नाहृत्य भूपते ॥ समर्पयित्वा सततं तच्छिनः पुननागतं ॥ एवं पंचसहस्राणि वर्षाणि विगतानित ॥४१॥

तत्र तावदुच्चानां देवादिजनानां नीचानां दैत्यादि पिशाचकांतानां द्वंद्वप्रतिपंथिनो नेकशः एकशः सनामानो भिन्ननामानश्च संति ॥ ब्रह्मवाय्वोः कल्याद्यः ॥ इंद्रस्य बलपाक वृत्रादयः। चंद्रसूर्ययो राहुकेतु इत्याद्येवं शास्त्र दृष्ट्यनुसारेण द्रष्टव्यं। एते वनबला दुच्चा प्रबलाः ॥ बाहुशालिनो उद्देश्या प्रिय घोरतपः शालिनो। बहु भोगाः ॥ स्वविरोध्युच्चापेक्षया प्रागेव संपूर्ण स्वयोग्य गति साधनाः। स्वयोग्य गतिमाप्नुवंति ॥ उच्चानि स्वर्गबलाः गुप्तरूपाः। उद्देश्य प्रिय मृदु तपः कर्तारः। अल्प भोगाः। स्वविरोधिनी चानंतरमेव संपूर्ण साधनाः स्वयोग्य सिद्धिं कालेन आप्नुवंति ॥ एतेच परस्पर सर्वेषां सर्ववर्ग विरोधिनः ॥ द्वंद्वविरोधिनस्तु ते एव। एते देशकाल देह सामान्याधिकरण्येन वैय्यधिकरण्येन परस्परं विप्रकुर्वंति ॥ हर्यनुग्रहा देवोच्चैर्जय्या ॥

भ·पु·  एते ···· शेषे ब्रह्म वायू विना परस्पन माबिष्णुः परि भवंतीति ॥४४॥  वें·मा·
प्र  तथाच प्राकृते ब्रह्मवर्त्तः लगुड्ढो धर्मो वृषनामा देवः ॥ तस्यायं स  ३
नामा वृषभा····नोद्वंद्व परिपंथी ॥ तथाच तावत्स्वयमेव स्वानुरूपं
भाषत इत्याह ॥ मुहूर्तांत इत्यादिना पुरुषोत्तमे त्यंतेन ॥दशावनेति॥

तस्मिन्काले त्र बिंदाक्षः प्रत्यक्षः समभूद्द्वजः ॥ शिलांतर्यामी
भगवान् श्रीनिवासः सतां गतिः ॥४२॥ तमालोक्य हृषीकेशं
वृषभो दंडवद्भुवि ॥ पपात नाज शार्दूल सविसंजमुपेयिवान् ॥४३॥

दशावनाख्यां विभवो विभूतिर्य····न शास्त्रे तच्छ्रुति स्मृति पुराणादि।
विक्रमो ति शक्तिः सोऽस्मिन्नस्तीति विक्रमं शास्त्रं तद्विक्रमं प्रत्यक्ष
दर्शयित्वा प्रामाण्यं द्रढयेत्यर्थः। यद्वोत्कर्षापकर्ष साम्यावस्थात्रय सा
धानणा स्थितिमात्र विवक्षायां सामान्येन नपुंसकं ॥ अस्मित्पक्षे मया
यन्ते विभवं विक्रमंच श्रुतं। तद्विभवं विक्रमंच सत्यमाधत्स्व। प्रत्यक्षं
दर्शयेत्यर्थः। यज्ञाते श्रुतं इदं विष्णुर्विचक्रमे इत्यादिना श्रुतं विक्रमं।
वृति प्रत्यभाषतेति पूर्वेणान्वयः ॥ ४५॥

मुहूर्तांते समुत्थाय प्रत्यभाषत केशवं ॥वृषभः॥केशवानंत
गोविंद श्रीनिवास सुरोत्तम ॥ न मोक्षं नच स्वर्गंच पारमेष्ठ्या
पदं हने ॥ नयाचे जगतां नाथ युद्ध भिक्षांच देहि मे॥ दशाव
तान विभवं श्रुतं ते विक्रमं हने ॥ अद्य तत्सत्यमाधत्स्व
विक्रमं पुरुषोत्तम ॥४६॥

ततः किमकरो श्रीनिवास इत्यत आह ॥ देव इत्यादिना निमर्दन
इत्यंतेन । किंचिद्धास्य मुख इति ॥ आत्मनः परस्य वा वेष भाषाकार
विकार विनाद्वालंकाना स्पष्ट भाषण कुब्जत्वादि दर्शन श्रवणजन्यो
मनो विकासो हासः ॥ अयमेव बाष्पाद्यनुभावो विद्रालस्यादि सह
कृतश्चर्व्यमाणो हास्यो भवति। तदुक्तं ॥ विकृताकृति वाग्विशेषैरा
त्मनो वा परस्य वा हासस्यात्परिपोष स्य स्मि प्रकृतिः स्मृत इति ॥
स्मितमित्र विकासि नयनं। किंचिल्लक्ष्य द्विजं हसितं। मधुरस्वनं वि
हसितं।

अ.पु. सांसशिनः कंपमुद्धसितं। अपहसितं साश्राक्षं विक्षिप्तांगं भव वें.भा.
त्यति हसितं। द्वे द्वे हसिते चैषां ज्येष्ठे मध्ये ऽधमे क्रमः। उत्तमस्य १
स्वीय परकीय विकारादि दर्शनात् क्रमेण स्मित हसिते। मध्यमस्य
विहसितोपहसिते। अधमस्य विहसितातिहसित इति। प्रकृतेत्थं
तु हरिणा दशावतार विभवे दर्शनीये ऽनेवानंदा तुंबुरुतीर्थे सत्य
लोकस्थ(स्त)त्र वेदाभ्यास रतो ब्रह्मा तं चोपासंतो वेदाभिमानिन्यो
देव्यश्च दर्शनीयाः। तत्र तदायं तदपहाराय सुरमो हिन्या मायया
हयग्रीवः। तदा मया मत्स्यावतारेण भवितव्यं। ततस्तस्य आकाम
माबलं युद्धं भविष्यति। ततः सोऽपि मत्स्यकः ततो युद्धो पनमस्तदव
तारस्य॥ एवं कूर्मावतारे ऽयं वृषभं करुशार्णवं। अर्णवं मंथानं मं
दनं नेत्रं वासुकिं। मथन(र्थन)तो देवासुरान्। दर्शयति। तदा मया
कूर्मेण भवितव्यं। ततस्तस्याकाम मित्यादि पूर्ववत्। एवं वराहादि
षु द्रष्टव्यं। मत्स्यस्य मत्स्यकः। कूर्मस्य कूर्मकः। वराहस्य वराहकः।
इत्येवं युद्धावसाने दर्शयिष्यतीति भाविनी मप्यासुरीं मायामनु
पश्यन्निति सर्वान्पश्यन्तो हरिः॥

देवस्तद्धानतीं श्रुत्वा किंचिद्धास्यमुखो हरिः॥ उवाच व
चनं तं च नाशसं युद्ध दुर्मदं॥४८॥ श्री भगवानुवाच॥
अलमित्युक्त्वा कृष्णास्तथाऽस्वित्यनिमर्दनः॥ तयो
र्युद्धमभून्तत्र वृषभ श्रीनिवासयोः॥४८॥

प्रत्यक्षीकृत्य स्वकीयावतार परकीय विकृति दर्शनादिना हसित
मुखः॥ अयमेव हासो बाष्पाद्यनुभावो नाशसकल्पित निद्रालसता
दिभिः स हकृतश्च व्यभिचारः पश्यतां देवानां हास्यो रसो भवति।
तदनुकरणाद्धा हास्यमुख इति वा। नित्यस्मित तस्यापि तस्य ···कथा स्मित
विशेषणं तत् युद्धं। तत्र तुंबुरुतीर्थे॥४८॥ तत्रैकं देवाद्भुतमभूत्॥यत्कृत
मिति॥स्वदन्तवनं सप्तं विधातुं तदाक ····त दशावतार विभवप्रदर्शना
य यत् मत्स्यादिकं कृतं प्रादुर्भावितं तन्तत् मत्स्यकादिकं कृतं वृषभेण
कृतं सुरमो हिन्या मायया कल्पितं। ह खेदे। ····दिकं। अद्भुतं अदृष्टचरं।
तद्युद्ध कौशलं तन्तदवतारोचित स्वकर्तव्य पूर्वोक्तनांग साकल्प कल्पना

भ.पु. पुनः सत्त्वं उत्सर्पाद् सम्यक् विमर्दनं नैपुण्यं। पर्यपूजयत् बहुमानमकरोत्॥ बें.मा.
ततः किमभूदित्यतो वृत्तं द्वितीयं पुंसूक्तोक्त विक्रमं प्रदर्शितवान् इत्याह॥ १
भो इत्यादिना॥ भूषितमित्यंतेन॥ विकृताकृतिं विस्तृताकृतिं। विश्वंभर
मूर्तिपर्याप्तं तज्ज्ञानसहं॥ ततः किमभूदित्यत आह॥ तन्मायामित्यादि इत्या
ना मोहिनीमित्यंतेन॥ तन्मायां तद्विधा प्रादुर्भूतां इतीति शेषः। माया
परव्यामोहनकारी। इयं च हन्तेर्ममैव असुरमोहिनी मायेति दृष्ट्वा ज्ञात्वा।
प्रत्येकं एकैकं प्रति प्रत्येकं। गरुडस्य गरुडकं। हन्तेर्हिनि प्रतिकृतं॥ ननु दशा
वतार विभूतेः पुंसूक्तोक्त विभूतेश्च विक्रमस्य च प्रतिदर्शने राक्षसस्य को
भिप्राय इति चेदित्थं भासते। तवैतत्सर्वं मायिकं त्वपरमार्थं सत्। अन्य न
था मामकमपि मायिकं तथा किं तस्यादिति॥ स हि सिद्धांत आसुराणां
यत्सात्ता नाम तत्त्वावेदकत्वं। तद्बुर्मनसि तदेव शोभनं स्यादिति तुष्यत्विति
न्यायेन तं शशंसेत्यत आह॥ तद्वचनस्येति॥ साधु साधु।

यत्कृतं श्रीनिवासेन तत्कृतं वृषभेण हि॥ तदद्भुतमभूत्तत्र देवा
नां पश्यतामपि॥ तद्युद्धकौशलं दृष्ट्वा भगवान्पर्यपूजयत्॥
भो राक्षसकुलोत्पन्न पश्यमे पौरुषं बलं॥ इत्युक्त्वा दर्शयामा
स गरुडं वितताकृतिं॥ तत्रस्थं वासुदेवं च विश्वरूपिणमव्य
यं॥ सहस्र भुजसंयुक्तं सहस्रायुध भूषितं॥ तन्मायां राक्ष
सो दृष्ट्वा प्रत्येकं गरुडं हरिं॥ दर्शयामास नागेंद्र स्वमायां सुर
मोहिनीं॥६२॥

शोभनं शोभनं। सदसद्विवेकः पराक्रमाद्भविष्यत्यतो हे पराक्रमे त्वमपि
पराक्रमस्वेत्याह॥ रे रे इत्यादिना दृमादित्यंतेन। रे दुष्ट संबोधने। बालपादे
नामं जितस्येत्यादिना सूयार्थे द्विर्भावः॥ सर्वरूतस्यापाहिकत्वात्त्वनितमो
म्रेडितमित्यादिना प्लुताभावः। त्वामित्यकथितं कर्म। तथास्यान्तीहकृष्वहा
मित्युक्तेः तव शिर इत्यर्थः। पूर्वं साधनावस्थायां शिरः पुष्पं इदानीं तत्फल
मभूदिति फलोपमा। इत्युक्त्वा चक्रमुज्जृंभे इत्यर्थः॥ इतः परं एतदाविष्ट
सद्वृषभवृत्तांतः। द्विजीव साधारणाः वामने द्वितीय अध्याये वृषभा
सुरकथायाः सद्वृषभवृत्तांते पर्यवसानात्॥ तथा हि शंकरः। धर्मो मनु
स्तपस्तेपे सोयं वृष इतीरितः॥ तपश्चरति तस्मिंस्तु ववृधे धर्म उत्तमः॥

वी
नक्तं चनस्य चनित मतिक्रांतुं क्षमो दृनिः॥ शशंस नाक्षसंक्षीनं
साधु साधिव[illegible]त्य भाषत॥ नेने नाक्षस वर्मवां चक्रेण यत
नेमिना॥ आहृनिष्ये शिनः काया यथा पक्व फलं दृमात्॥९५॥
इत्युक्तो देव नाजेन वृषभो दंडवद्भुवि॥ प्रणिपत्याथ विश्वे
श मस्तुवद्राक्षसेश्वनः॥९६॥

ततः प्रसन्नो भगवान् महाक्षेत्रो मह्नीयुतः॥ रामक्षमन्त्रवीद्धर्मं यनन्मे ....
स्पितः॥ धर्मत्वया तपस्तीव्रं वृषभ्य ववृधे यतः॥ तस्मादयं शिनिवनो वृषभा
रव्यां गमिष्यति॥ विष्वक्सेनः पुना धर्मं जघान वृषभासुनं॥ विनाशितस्तेन
धर्मः पुन .... वर्धितस्त्वया॥ तथापि लोकपालत्वं यमात्पश्चाद्भविष्यतीति॥९९॥
श्रुतमिति॥ चक्रेण प्रतप्तो मुक्तिमेतीति॥ योहवै लोके भूम्नो धर्मानन्नु
तिष्ठमानो.... ना चक्रं धत्तेऽग्निर्वै सहस्रानः सहस्रनेमिः नेमिना तप्त
तनुः सायुज्य लोकतामाप्नोतीत्यादि श्रुति सिद्धं॥ यच्चक्रेणेति पुना पूर्व
कल्पे। सार्वभौमः पुना कश्चिदैक्ष्वाकः कुलः ...णः॥ कीर्तिमानिति विख्या
तो नृपपुत्रो महायशा इत्युक्तः कीर्तिमान्नाम नाजा॥ यच्चक्रेण विष्णुमु
क्तं तदाचक्रं शीघ्रमागत्य तद्रणं॥ यम दंडेन संयुद्धा ब्रह्मास्त्रे विनिवाय
चेत्युक्त चक्रेण॥ कीर्तिं वैष्णव धर्म श्रद्धादार्ढ्येन हनि भक्तारोसनः
कालांतक यम विजयी वैकुंठ विहारीति कीर्तिं आप्तवानित्यर्थः। विशेष जिज्ञा
सायां स्कांदे वैशाख माहात्म्ये दशमादि द्वादशांता अध्यायाः श्रोतव्याः।
एवमुक्तेति॥ हे हरे मयैव पूर्वं प्राणाः शिनः पुण्यार्हेण नत्वत्पदांबुजे समर्पिताः॥
जीवितंतु न यन्चिहं क्षुद्रं पापस्य कानणं॥ त्वच्चक्रेण हतः शीघ्रं गच्छामि तव
मंदिरं। अतस्त्व मिदानीं चक्रेणाहृत्य शिनः फलमनुगृहाणेत्येव मुक्त्वा। म
मा भि[illegible]ः(धः)। अत स्थिति शेषः। तथाच ममाभिधः मत्संबंधि वृषभ
इति नामवानस्तु। इति वनं ययाच इत्यन्वयः। भवेदेवं इति। एवं॥ वृषभा
चल इति नामवान्। भवेत् इति वने दत्ते। समालिंग्य। वनदानानंतनं अनिः
शिनो जहान। ततो निशातन वानतन साहत कवठी कांडव अणं जीवन्
समालिंग[illegible](गे) त्यर्थः। अतो न हुनेः प्रपन्ना इति दोषो नाप्या लिंगन बाधः।
तदुक्तं ब्रह्मां[illegible](डे)। ततः कदाचिन्मृगया विहानकांक्ष मानसः॥ सेनापति
मुवाचेदं प्रहसन्निव माधवः। देशे स विपिनोद्देशे विहर्तु मिति मे मतिः॥
सज्जी भवंतु सैन्यानि निदेशाद्भवतोऽधुना॥ इत्युक्त्वा भगवां स्तूर्णं

भ.पु. निर्भयो मृगलाञ्छनः॥ अथ उत्तर गिरौ विचचार समं शबरबालकैः तस्मि वें.मा.
न्काले भक्तो वृषभाख्यो महासुरः। शिवे भक्तः नृसिंह भक्तः। भविष्योत्त १.
रानुगुण्यात्। तयोस्सम भव युद्धं बभूव भयदायकं। ततः शबराकृति धा
रिणं हरिं दुर्जयं मत्वा मायां वितत्य स्वयमंतर्दधे। तन्मायानाशाय चक्रं
प्रेरयामास। तेन विनाशितां तां मायां दृष्ट्वा विस्मित अमानुषं परब्रह्मेति
ज्ञात्वाऽनेन हतो मुक्तो स्मीति चिंतयन् अभीष्टं प्रार्थयामास। जीवितं (तु)
मया चेह क्षुद्रं पापस्य कारणं। अतो यास्यामि निहतश्चक्रेण परमां गतिं॥
अतः प्रभृति अयं गिरि वृषभाचल इति मदीयां प्रथां यातु इत्युक्ते त
थास्त्विति दत्त वरं वैकुंठज्ञात्वा ततस्सुदर्शनश्चापि ज्वालाजटिलविग्रहः॥
जहार समरे शत्रोः कंठनाल शिरोम्बुजं इति॥ नच नृषेसेन लुप्यत
इति वाच्यं। अनुग्रहादेव हननात्। अत्रेदं बोध्यं। देवानां कर्मकारक
गणानि विष्णुसुनमध्येऽपमपि आजानेय गणानि विष्णोऽसुरः कश्चने
ति पक्षे नजीवद्वय चिंतेति। यद्वा अयं मुनेनैकोऽर्थः सुगमः। तथाहि वृषभे
ण नृतयं याचितं युद्धं दशावतार विभवः पराक्रमश्चेति॥ तयोर्युद्धमित्या
दिना युद्धं। यत्कृतमित्यादिना दशावतार विभवः। नेनेत्यादिना पराक्रम
श्चेति॥ अस्मिन्नाम्नि चक्रमाहात्म्यकथनाद्धर्म माहात्म्य कथनाच्च प्रथ
म दिवस माहात्म्यमुक्तं। अनेन साधकानां धर्माभिवृद्धिः। ननु कथ
मनेन जनकस्यातंक परिहार इति चेत् इत्थं। यथा धर्मग्लापक वृषपेष
णं हानिष्णाकृतं तथा यदा यदा हि धर्मस्य ग्लानिर्भवति भारत। अभ्युत्था
नमधर्मस्य तदात्मानं सृजाम्यहं॥ इत्यादि स्ववचन परिपालनाय भगवती
र्थे न हरिणा नारकातंक परिहारो भवतीति॥९९॥ इति श्री वृषभनाम
सेवा॥ श्री श्री निवासार्पणमस्तु॥

चक्रपाणे नमस्तुभ्यं चक्रस्य चरितं श्रुतं॥ यच्चक्रेण प्रतप्त
स्तु मुक्तिमेति न संशयः॥९६॥ यच्चक्रेण पुरा राजा कीर्तिमान्
कीर्तिमाप्तवान्॥ त्वच्चक्रेण हतः शीघ्रं गच्छामि तव मंदिरं॥९७॥
एवमुक्त्वा हरेः पादौ संस्पृश्य वृषभासुरः॥ वरं ययाचे
वृषभश्चायं शैलो ममाभिधः॥९८॥ भवेदेवं समालिंग्य
त्यक्तवान्स्वकलेवरं॥ तस्माद्वृषभशैलोयं कृते ख्याति
र्ययोदिता॥९९॥

श्रीगुरुभ्यो नमः॥ देवदेव जगन्नाथ प्रसीद पुरुषोत्तम। परिपालय मां
भक्तं शरणागतवत्सल॥ बुद्धिर्बलं यशो धैर्यं निर्भयत्वमरोगता॥ अजा
ड्यं वाक्पटुत्वं च हनुमत्स्मरणाद्भवेत्॥ ॐ॥ कथमंजनशैलेतीति॥ नाम
स्वामिनं प्रति सर्वे विध्यादिव्य वदानाः ....ध्व प्रवर्तंते। नक्षत्र नामा
प्रथमं दद्यात्संबुध्य चैव हीत्युक्तत्वात्। नाम नामेति नामेति नमे नामे
इति दर्शनात्॥ आनंदतीर्थेति पदमिति दर्शनाच्च संबुध्यनु कनणमिदं। अतो
ऽजनशैलेत्याद्रुण एव अंजनशैलः इति अंजनशैलेतीत्यंतः सुप् सुपेतिवा
समासो वा अविभक्तिक निर्देशो वा। पुनेति। त्रेतायां केसरीति। केशान् केसन्
वर्णाभान्संभृतो वानरोत्तमः केसरी त्येव नामासौ भुवि मातावैः कथ्यते।
इत्युत्तन नामचनितोक प्रकारेण प्रशस्ताः केसराः अस्य संतीति केसरी।
तन्नामकस्य मनःप्रवतानस्य ब्रह्मपुत्रस्य कपेः। पत्नी अंजनेति। अन
न्हि केसरिणो मातामहस्य नेत्रस्थानीयं दौहित्रं अंजनवत्तपसा करोती
ति अंजना। तदुक्तं ब्रह्मांडे। त्रेतायुगेऽसुनः कश्चित्केसरी त्येव विश्रुतः।
पुत्रार्थी देवमुद्दिश्य तपस्तेपे महायशाः। प्रीतः प्रादनभूदग्रे शंकरो
लोकशंकरः। न पुत्रं दातुमिच्छामि परितुष्टोप्यहं तव। यस्मात्ते विधि
ना पूर्वं लिखिता पुत्रहीनता। तथापि दास्ये कन्यां वै नृपयौवनशालि
नीं। तस्यां उत्पत्स्यते पुत्रस्तवदभीष्टचनो ध्रुवं॥ ततस्तस्या भवत्कन्या
ह्यंजना मंजुभाषिणी। ततः कपिवनः कश्चित्केसरीति भुवि विश्रुतः।
अभिगम्य ययाचे तां कन्यां यौवनशालिनीं। तस्मै तामंजनां प्रादात्
इति। देवं महादेवांतर्यामिणं नृसिंहमित्यर्थः। अस्यैव कुंजन इति
नामांतरं। दुहिता वानरेंद्रस्य कुंजनस्य महात्मन इत्युक्तेः। तथाच
हनूमान् केसरिणः पुत्रो दौहित्रश्च। यथा कथंचित्केसरि पुत्र इति
ख्यात्यर्थं स तास्मै कन्यां ददाविति भावः। अंजना पिता केसरी
यद्यप्यसुनः तथाप्यसौ प्राणो नमत इति वायुभक्तः। नृसिंहोपास
को वृषभवत्। शचीवदंजनायाः असुनज त्वेप्य दोषात्। द्यमंजना
प्सनसः। अंजनात्वेन संजाता मंजुला पुंजकस्थली त्युक्तेः। नामायणे
पि इयमप्सनसां श्रेष्ठा विख्याता पुंजकस्थलीति॥ ६॥ अनपत्या
त्व दुःखेनेति॥ अपत्यस्याभावो नपत्यं। तञ् समासः। तस्यात्य
मानृण्यं केन वाप्नुयां। वृथा मे मंदभाग्याया संततिं च विनाकृता।
पुत्रेण मे विहीनाया किंनु विश्रामितं कुलं। धन्याः खलु स्त्रियस्ता

भ.पु. नै पुत्रस्नेहेन निर्भरं पोषयामास । यत्तश्यंति तनुस्मितं । मुखमंके वें.मा.
शयालानां पुत्राणां पुत्रवत्सलाः । इति संचिंत्य बहु---पुत्रार्थं वामलोच १
नेति ब्रह्मांडोक्त दुःखेन । अनिंद्या । अपत्य प्रतिबंधक दुर्लक्षण
रहिता । अपत्य कर्शिता । अपत्य चिंतातद् कृत तनुवल्ली ॥

> जनकः ॥ कथमंजन शैलेति त्रेतायां नाम मे वद ॥ पुनाकेसनि
> छः पत्नी ह्यंजना कंज लोचना ॥५०॥ अनपत्यारव्य दुःखे
> न मतंग मुनिमभ्यगात् ॥ ननाम मुनि शार्दूलमनिंद्या
> पत्य कर्शिता ॥५१॥ उवाच वचनं नेत्र नीर सक्त कलेवना ॥

किं मइति ॥ हे तापस शार्दूल । मे किं कृतं दुष्कृतं कृतमस्ति । पुनर्तो मेऽ
पुत्राया गति---प्राप्तिकरी नीतिः । का । देवाया (व्या) तपोमय देहया ॥
यथासुखं । यथाभिमत मार्गेण द्वादशाब्द व्रतं चनेति । द्वादशगुणितं
मब्द नामक व्रतं चनेत्यर्थः । अब्द व्रतंच । प्रथमाब्द लक्षणमित्यानभ्य
विनिर्दिशोदित्यंत धर्म संग्रहोक्त नीत्या । स्वामितीर्थ सनः स्नान मश्व
त्थस्य प्रदक्षिणं । वनाद्देव नमनं तत्तीर्थ प्राशनं तथा । चतुर्विधाना
मेतेषामब्द संख्यां प्रकल्पयेत् । त्रिकाल कृत मेकस्मिन् दिने स्नाना
दिकं चयत् । तदुच्यते कृध्र इति त्रिंशन्ते ह्यब्द संज्ञिताः । अब्दोहि
द्वादशावृत्तो द्वादशाब्द व्रतं भवेत् । इति ॥५८॥ सांग मुक्त व्रतशनीन
माह । कुब्रेत्यादिना भक्षा वर्जिते त्यंतेन । तपः पूर्वांग तया भक्षार्थं भो
जनाय मुनीनामंत्र्य । मतंगर्षीणां वनमालंब्य भवतामाश्रमे भवद्भि
रनुज्ञाता पुत्रार्थं तपश्चनिष्याम्य तस्तत्संगलांग भोजनाय भवंतो
नुगृहंत्विति त्यपेषणं विधायाभ्यर्च्य विधिवद्भोजयित्वा भीप्सितं
तेभ्यो दत्वाशिषमादाय तेभ्योनुज्ञां प्राप्य भक्षार्थं स्वोपजीवनार्थं
भर्तारं अभिमान्यभिमन्यमानयो न भेद व्यपदेशाद्भर्तृ भिमन्यमानं
नाग पुन्नागादि सुपुष्प सुगंधि मकरंद पनागोद्वाहि शीतल भूत
वायुं । भर्तुः सकाशाद्यथाकाम मस्त्वित्यनुज्ञां लब्ध्वा पुनर्भर्तारं । केसनिछं
आमंत्र्य । व्रतमनुप्राप्य । भक्ष वर्जिता । पूर्वोक्त वायितनाहान तिनाहाना ।
प्रत्यहं त्रिषवणं स्वामिसनः स्नानं अश्वत्थ प्रदक्षिणं वनाद्देव नमनं कृत्वा ।
तत्सलिलं तत्पाद सलिलं पीत्वा प्राश्य मातनमिव नितकानिछीं आकाश

भ.पु. गंगामासाद्य तत्तटे भर्तारं वायुमुद्दिश्य प्रदोषमाप्नमाते तदभ्युपयाच वें.मा.
नन्दपं तपः कर्तुं उपस्थिता। उपक्रांता इति आमंत्र्य भर्तारं भक्षार्थं इ १
ति पदत्रयाणांतेत्र न्यायेन योजना। इदमेवाब्द व्रतं त्रयोदशदिनाधिक
मेकोन विंशति मासमेव कनिष्पत इति भावः। तदुक्तं ब्रह्मांडे। पुत्रार्थं
वामलोचना॥ द्विजानभ्यर्च्य विधिवदाशिषो वाचयद्यथा॥ ददावभी
प्सितं तेभ्यः सर्वदेवयशस्विनी॥ प्रचक्रमे तपस्तप्तुं श्रीवेंकटगिरे
स्तटे॥ आकाशगंगा निकटे सिद्धसंघनिषेविते। वाय्वाहारनाच वायुंच
समुद्दिश्य सुदारुणं॥ तपश्चचार कौंतेय मित्य ---- दि। भक्षार्थं वाय्वाहा
र मनुज्ञाप्येति योजना मूलं वा --- सनेयके तस्मात्समानदेव पुनःषाद
-ताद्धश्यो पश्चायते उत तर्हि तृतीये संगच्छावहै। चतुर्थे संगच्छावहै
इति॥ तस्मात्समान देकस्मात् पुनःषा दन्ता अत्री ---- र्त स्वामिक धन
भोक्त्री तत्कर्तृकया फलभोक्त्री वा भार्येति यावत्। आद्ये भो किंमइति॥
हे तापस शार्दूल॥ मे किं कृतं दुष्कृतं कृतमस्ति॥ पुनतो मेऽपुत्राया गति
नत्र प्राप्तिकनी निति:॥ का। देव्या तपो मय देहमा॥ यथासुखं॥ यथाभि
मत मार्गेण॥ द्वादशाब्द व्रतं चरेति॥ द्वादशगणित मस्त नामक व्रतं
चरेत्यर्थः॥ अब्द वृतंच॥ अथाब्द लक्षणमित्यानभ्य विति। आद्ये भोग्यः॥

> अंजना॥ किं मे तापस शार्दूल अपुत्राया भ्व कागतिः॥ इत्युक्तः
> सोंजना देव्या मतंगो वाक्य मब्रवीत्॥ मतंगः॥ पंपायाः पूर्व
> दिग्भागे पंचाशद्योजनांतने॥ नान सिंहाश्रमं देवि वर्तते
> वसुधातले॥ तस्य दक्षिण दिग्भागे नानायण गिरेस्तटे॥
> उत्तने स्वामितीर्थस्य वर्तते क्रोशमात्रके॥ वियद्गंगेति वि
> ख्याता तत्र गच्छ यथासुखं॥ तत्र स्नात्वा यकल्याणि द्वा
> दशाब्द व्रतं चर॥ तेन पुण्येन ते पुत्रो भविष्यति गुणा
> धिकः॥ मतंगेनैव मुक्ता गा न्नानायण गिरिं नृप॥ ६८॥

स्वस्वामिक भागधेय द्वानोप जीव्यः पतिनिति यावत्। ऋतुस्नो र्ष्यात्।
---- व्रतेच तीर्थेऽध्ययने श्राद्धेपिच विशेषतः। पनान्न भोजयादेवि
यस्यान्नं तस्य तत्फलं हत्युक्त्या पनान्न नियमः। संपन्नः। भर्तारं
व्रतमनुज्ञाप्येत्यत्र भार्या पत्युर्मतेनैव व्रतादीनाचरेत्सदेति कात्यायनो
क्तिः॥

कृत्वा स्वामिसनः स्नानमश्वत्थस्य प्रदक्षिणं ॥ वनादनप्रिणं
नत्वा पीत्वा तत्सलिलं शुभं ॥६८॥ आकाशगंगा मासाद्या
तपः कर्तुमुपास्थिता ॥ मुनीनामग्य भर्तीनं भक्षार्थं भक्षवर्जिता ॥६९॥

पें-मा.
१

एतेन पतिरेव स्त्रियो धर्मः पतिरेव स्त्रियो धनं । पतिरेव स्त्रियो बंधुः
पतिरेव महत्तपः । नास्ति स्त्रीणां पृथग्धर्मो न व्रतं नाप्युपोषणं इत्या
दि वचनाद्धर्मे स्वतंत्रः पतिः तस्य तत्समे धर्मे तदनुकूला गृहमेधनी
सती नतु पृथग्धर्मे स्वतंत्रा । पतिशुश्रूषयैवैताः कामान्निष्टान्व्रजंति
हीति वचनात् ॥ भुक्ते भुंक्ते (क्ते) चया पत्यौ दुःखिते दुःखिता यति ।
मुदिते मुदितात्यर्थं प्रोषिते मलिनांबन । सुप्ते पश्चाच्च या शेते पूर्व
मेव प्रबुध्यते । नान्यं कामयते चित्ते साभिज्ञेया पतिव्रतेति उक्तलक्ष
णेन पतिव्रतेन विनान्येण साधना भावात्कथमेतत्पृथग्व्रतमिति नि
रस्तं । एतद्वचनस्य भर्त्रननुमति विषयत्वात् । किंचास्य व्रतस्य भर्त्रू
द्देश्यकत्वात्पतिव्रतत्वेन दोष इति ध्येयं । भक्षवर्जितेत्यस्य वायवा
हाने पर्यवसाने मूलं । खन विशदमभ्यवहार्यं भक्षं स एव भक्षः । स्वनं
कठिणं विशदं विविक्तावयवं । अभ्यवहार्यं खाद्यं कपिनाजपत्नी
त्वाद्यथापूर्वं भोजने भक्ष्य भोज्य प्रसक्तौ तद्राहित्य मनेनोच्यते तथा
चैकादश्युपवास तत्समानोपवासा भ्यतिनिक्तं रौ भाग्याद्यर्थ काम्य व्रतो
णोपवासेषु सुपुत्र धीणां निनाहान निषेधात् ॥ ब्रह्मांडो कुपाच वायवा
हाने पर्यवस्यतीति ॥७०॥ उपवास परेति । यत उपवासे तात्पर्यमुक्ता ।
अात्ता क्षौमत्यंगी । बाह्य भोग विवर्जिता कायकामोपचारोपयिक सुगंध
स्नेहेन शिनोगात्राद्यभ्यंजन केश धूपन तत्प्रसाधन विचित्र तत्पाशनच
न घनसान कस्तूरी पुष्पतलक घुसृण नोचनादिना पनिकल्पितांग नागेण
लावण्य कनण स्मनशन सहचना पांगांजन लेपन कुचकुंकुम कनणमकनि
का पत्र नचन गंधलेपन श्रृंगान तिलक धानण सिंदून प्रक्षेपण कपोलादि
क्षौमकनण सुचैल चोळ धानण चतुर्विध भूषण पनिष्कनण मदकानि
द्रव्य सेवन तांबूल चर्वणादि बाह्यभोग वर्जिता । तदुक्तं हनिवंशे पुष्पक
व्रतकांडे । अंजनं नोचनं चैव गंधान्सुमनसस्तथा । व्रते चैवोपवासे च
नित्यमेव विवर्जयेत् । शिनसोऽभ्यंजनं सोम्यि नैवमेतत्प्रशस्यते ।
न पादयोर्न गात्रस्य स्नेहेनेति स्थितिः स्मृतेति ॥

उपवासपरा बाला बाह्यभोगविवर्जिता ॥ काष्ठवत्पर्यव
स्थाय शरीरं स्वात्मनः शुचि ॥६२॥ पूर्णे संवत्सरे जाते
बलदेवो महाबलः ॥



ननु व्रतांग शुद्धिभूत दंतधावन मंगल स्नान केशप्रसाधन सौभाग्यहेतु
हरिद्राभावनोर्ध्व पुंड्र धारण तदुपरि गदा मुद्र धारण कुंकुम धारणां
जन ---- सिंधूर प्रक्षेपण निर्माल्य माला धारण तांबूल दानादि वर्जिता
सौभाग्यवती तां एकादशी तत्समोपवास व्यतिरिक्त काम्य व्रतांगोपवासे
ष्व वैधव्य करणां ---- विहितत्वात् । तदुक्तं सुवासिनी व्रत कांडे ॥ अंजनं
च स तांबूलं कुंकुमं नक्तवाससी । धारयेत्सोपवासापि अवैधव्यकं यतः ।
विधवा पति मार्गेण कुमारी वायदृश्यपेति । मनुनपि । पुष्पालंकार व
स्त्राणि गंध धूपानुलेपनं । उपवासेन दुष्यंति दंतधावनमंजनमिति ॥
विष्णुधर्मेपि । धारयेद्रक्त वस्त्राणि कुसुमानि सितानि च । विधवा शुक्ल
वसनमेकमेव हि धारयेत् । इति । यद्यप्यन्य साधारण मानुष स्त्रीणां
व्रतांग शुध्यंग केशप्रसाधन दंतधावनाद्यभावे निर्जीव छिन्न केश
संसर्गात्कर्मांग केश शुध्यभावेनांग वैकल्य जिगुप्सा प्रसक्तिश्च शोष
णेच सादृवैवर्ण्य कार्श्याद्यापत्तिश्च भवति अंजनादिहस्य तु तपोमय
त्वेन दिव्योपपादुक शरीरवत्तेजोमयत्वात्सहज शिरोरुहाणामेवोपच
यात्सूक्ष्माणामनाला नामसितानां नील नाग सदृचनाणां स्निग्धानाम
भिन्नाग्राणामछिन्नानां समूहे मालिन्य शंकानुदयात् । तपसा शोषणे
पि विलापनं अयो घट्टनेन पत्र पुटीकरणं संतापनं पुनः पुनर्विलापना
दीत्येवमष्टादश धानिष्ट -------- नैव भवति । अत एवोक्तं भूनिव्रत
प्रभव दिव्य सुकांति मंतावितिः ॥ तथापि सौभाग्यार्थं लोक शिक्षणा लो
र्थं एतान्यादृत वतीत्याशयेन बाह्यभोगविवर्जितेत्युक्तं । बाह्या धर्म
दीक्षा बाह्या बहिनर्थ भावाः कामुकाः तेषां भोगः कायकामोपचारा
स्तद्वर्जितेत्यर्थः । तस्मात्स्वात्मनः शरीरं काष्ठवत् श्री तुलसी काष्ठ
वत् पर्यवस्थाय पर्यवसित शोषणं कृत्वा । शुचि । परिशुद्धमकरोत् ॥६१॥
पूर्णेति । द्वादशाब्द व्रते संपूर्णे । नचातीते सप्तसाहस्रे वत्सनाणामनंतन
मित्यादि ब्रह्मांड विरोधः । तत्र वत्सन शब्दो ब्द व्रत परः । तथाचाब्द
व्रतेन द्वादशाब्दे संपूर्णेपि तदुपर्यपि तव तपसाहं तोषितस्तत्पूर्ण

भ.पु. तामिति सूचनपर्यंतं मायावदधिकानं वा इदमेवाचनिष्यामीत्या वें-प्रा.
चनं त्या पुतनेको मासो जातः। ततश्चतुर्दश मासाद्य दिने सूचनं विना १.
पि गर्भ एवांकुनितः। अत एवैतदुपर्यपि गर्भाना येदमेवाचनणीयमि
ति फलदातुर्देवस्ये छास्ति। अलभ्य योगोप यस्यास्यास्य क्षेमोपाय
त्वं कैमुत्य सिध्धमित्यालोचन पुननिदमेवव्रतमाचनिष्यामीत्याचनं
त्या त्रयोदश दिनाधिकाः षण्मासा जाताः। तत एकोन विंशे मासे त्रयो
दश दिनानंतनं चतुर्दशाद्य दिने प्रातव्रतं कृत्वा संपूर्णां। ततोऽनधिका
ना द्गर्भ भानाच्चेति भावः। तथाच त्रयोदश दिनाधिकेकोन विंशति
मासा जाताः। तथाच समुदाये वृत्तां शब्दा अवयेष्वपि वर्तंत इत्याक
नोक्त न्यायात् षष्ठ्यन्तन त्रिशत संख्या गणित स्वात्रादि समुदाय वाचि
नोऽब्द शब्दस्यावयव पनत्व संभवादब्दानां सप्त सादृस्यत्वं॥पार्वती
शंभु शब्दा महालक्ष्मी नृसिंहपनाः। नचातीत इत्यन विनोधः। असे
तुं समापयितुं आशंसित इत्यर्थात्। आशंसायां भूतवच्चेति भूत
वद्भावः। तथाचेत्थं योजना। महाबलो बलदेवो वायुः संवत्सने पू
र्णे वाय्वाह्वाने नैव जाते अनंतनं त्रयोदशे मासे भक्षार्थं स्वयंफल
मादाय प्रत्यहं अन्वहं दापयन् स्वयं दृगगोचनः सन् दातानं भूत
वायुं प्रेनयन् आसीदिति शेषः॥६२॥ अथ त्रयोदशमासानंतनं किं
चिद्दिने चतुर्दशे आद्य दिने वायुः स्वयमेव फले वीर्यं नृसिंहते
जोप बृंहितं प्रपूनयन्नासीत्। तत् वीर्यगर्भफलं तस्या अंजनदेव्याः।
कन संपुटे। मरुत्। ये मारुदो मारुद इति वानां वाचं वजिणा वज्रेण
सप्त सप्त धाभिद्यमाना अपि अमृत्यस्तेषां मुख्यो मरुत्। प्राक्षिप
त्। वायुनर्पयेति शेषः। मरुदिति वचनेन दंत घाता दिना जाढनाभि संबं
धेन चतवीर्यस्यवीर्यहानि निति द्रष्टव्यं। तथाचोक्तं ब्रह्मांडे। ततःप्री
तमना वायुः फलमेकं दिने दिने। भक्षणार्थं ददौ तस्यै दृगोचनमना
गतः इति आत्मा देवानां भुवनस्य गर्भो यथावयं चनति देव एषः। घो
षा यदस्य शृण्विनेन(न) रूपं तस्मै वाताय हविषा विधेमते इति श्रुतेः॥६३॥
फलमिति। भक्षिता नानकादित्वादि तच्। भक्षितवती। ततः तत एव।
फलप्राशनादेव न मैथुन धर्मेण। गर्भमिति। अंजनायाः समुत्पन्नं गर्भ
मुद्दिश्य मुनीनां अभवत् स्वप्न इति योजना मत्युं जनयोः शंकातंक
निवृत्यर्थं इति भावः। यद्वा गर्भ इवा चनति गर्भति गर्भतीति गर्भः अंजना

भ्.पु. अरुणोदय उदितो उडुनाज मंडलवत् गर्भ सदृशो तेजो मंडलं ननु यात वें.मा
नार्हि कांता दृता विलुके नं पुंस्त्व हानि पुंस्ते । मुनीना मिति । १

| |
|---|
| फल मादाय भक्षार्थं प्रयहे दापयन्नकृत ॥६॥ अथ किंचि दिति वायुः फले वीर्यं प्रपूनयन् । वीर्य गर्भ फलं तस्याः प्राक्षिपत् कन संपुटे ॥ ६२ ॥ |

अंजनाया गर्भे समुत्पन्ने तस्या नियंतं क्रियाया दोहद चिह्नानि क्रमेणा भूवन् । चिंतयंती किमेतन्मे निर्दोषायाः समागतं । अथवा विधिवैरूप्यं अहोमे मंद भाग्यता केन दोषेण चाहंवै ईदृशं रूपमागता । इत्येवं चिंतयंती दुःखिता भूत् । तन्मनः समाधानाय मुनीनां स्वप्नो वायु गर्भ समुद्भव इत्यभवत् । ततो गर्भ एवं ववृधे आपांडनी कृता तस्या नानाजत नु वक्त्री । कलंक ढीता चंद्रस्य लेखेव शित पक्षके । बिलीन चूचकं नेजे कुच मंडल मुन्नतं । पद्मकेशस्य सक्लीन भ्रमनस्य श्रियं दधौ (धौ) । नशाक भुवं गंतुं गर्भस्याति भारतः । इत्थ प्रववृधे तस्याः गर्भ प्रीति विवर्धनः । इति ब्रह्मांडे ॥६८॥ अंजनेति ॥ दशावयवको मासः दशमासस्तस्मींते पूर्तौ ॥ त्र्यवयवो लोक त्रिलोक इतिवत् । अथवा पत्रादेनाकृति गणत्वात् समाहान द्विगुणा । यद्वा पूरणा प्रत्यय लोपेन दश शब्दो दशमार्थः । दशम मासांत इत्यर्थः । उत्तमं सकल गुण नत्वं । लब्धाहर्व महानीद्रं जिह्वा लांगूल ...... । नक्षवस्त्रं सकौपीनं जटा मुकुट मंडितं । हृत्पद्म विन्यसेन्यासं छंदयंतं ----॥ वानरेंद्रं महेंद्रांभं वंदेहं पवनात्मजं य एवं वेदे त्युपनिषत् । अस्त बलिनं पुत्रं उदयत्यहि मलिषि ।

| |
|---|
| फलं सामान्य मात्वाहि क्षुधार्ता तच्च भक्षिता ॥ ततोगर्भं समुत्पन्नं मंजनाया ध्य भूमिप ॥ मुनीना मभवत्स्वप्नो वायु गर्भ समुद्भवः ॥६९॥ अंजना दशमासांते सुषुवे पुत्रमुत्तमं ॥ हनुमंत ममुं प्राहु र्मुनयो वीत कल्मषाः ॥६६॥ अंजना व्रत मास्थाय पुत्रं प्राप शिनी ध्वने ॥ |

कुंडलोड्डासि गंडांतं मुपवीति नमुज्वलं । कौपीनो द्भासितं चैव दीप्यमान मिव श्रिया ।

भ.मु. बिभ्राणां वानराणां वै रूपमत्यद्भुतं महत्। नखाश्च पुच्छ मूलं च शालि सूकसमं वें.मा.
श्रुतिमिति। एवं रूपं पुत्रं असूत। हनूमंतमिति ॥ मरुतो त्वष्ट वज्रेण यस्मादे १.
ष हनुर्हतः ॥ तस्मैव कपिशार्दूल भविता हनुमानिति इतींद्र निरुक्तिः ॥
हनु शब्दो ज्ञान वाची हनुमान्मति शब्दितः इति भगवत्पादीय निरुक्तिः ॥
प्रशस्तो हनुरस्यास्तीति हनुमान्। प्रशं (शं) सायां मतुप्। शरादीनां चेति दीर्घः।
अंजनायाः शैल अंजना शैलः ङ्याप्योः संज्ञा छंदसो बहुलमिति ह्रस्वः। देव
कि नंदनवत्॥ एतेन ज्ञान साधन द्वितीय दिग्वत्स्र स्वरूपं सूचितं। नन्व
तेन सीताया ख्याति रूपाया इत्यादि द्वितीय चिंतापनिदानः कथमितिचेत्।
इत्थं नामं प्रति सीता संदेश हननादि रूपं जनेयावतान प्रयोजनान्यथानु
पपत्तेरत्स वे हि। इति द्वितीय नाम सेवा ॥ श्रीः ॥ कं धस इति ॥ रुधीति धा
त्वं तनस्येदं रूपं आर्षं। मरुदिति संबोधनं। पुनाहंकारेण वृते द्वारपालाबावा
मिति अभिमानेन हतेः संमतानपि रुध्वा मुनिभिः शापितौ जय विजयौ।
कुंभकर्ण दशाननौ भूत्वा रामेण मृदितौ चूर्णीकृतौ। तत् कर्म त्वया विस्मृतं
मित्यर्थः। हे मूर्ख। अनात्मन्। द्वारप इति।

तस्मादंजन शैलोयं लोके ख्यात कीर्तिमान् ॥७७॥ जनकः ॥
संतोषमभवन्मह्यं श्रुत्वा तन्नाम कीर्तनं ॥ द्वापरे शेषशैलेति
कथं ख्यातिर्भविष्यति ॥७८॥ शतानंदः ॥ पुना वैकुंठ नगरे
द्वारि शेषं समादिशत्। देवाधिदेवो भगवान् रमा सार्धं समा
स्थितः ॥७९॥ तस्मिन्काले महाराज मारुतः प्राणवल्लभः ॥

इति स्वयमेवस्तं निरूपितः। किं तेन युक्तायुक्त विचार शून्येन साहंकारेण
द्वारपालत्वेनेति भावः ॥ तदिति ॥ तौ स्तो ॥ अति निष्ठुरैः गर्हयन्नग्रजज्वाले
त्यन्वयः ॥८५॥ कुत इति। जानंत्सं तमाक्षेपः। मोहिता इति समाधानं।
लोके भूलोके विद्यमाना जनाः। भानुगतिं पतत्पतंग पतनमिव कुतो न
जानंति न पश्यंति। किं भानो गतेन भावादुत भावेपि। नाद्यः। उदयास्त
मयौ न स्यतां। द्वितीयेतु कुतो न पश्यंति। मोहिता इत्येव वक्तव्यं। अयं भावः।
भानो बहून्नत स्थानेऽति वृते विद्यमानत्वात् गंभीरनयत्वात्। अतितीक्ष्ण
तेजिष्ठत्वेन दुर्निरीक्षत्वेन च मोहिता गच्छंतमपि गच्छतीति न पश्यं
तीति। कुतो भानुगतिर्लोक इतिपाठे। लोके अंतरिक्ष लोके।

एकस्मात्काननात्प्राप्तो भगवंतं जनार्दनं ॥ ज्ञानं निवेदयामास
क्रमदंडेन सर्पनात् ॥ किमर्थं कथसे मूर्ख कार्यस्य महती
त्वना ॥८१॥ अहमाज्ञाधनो विष्णोः मागच्छांत [illegible]स्ततोमनात् ॥
इति तस्य वचः श्रुत्वा जगत्प्राणोब्रवीदिदं ॥ वायुः ॥ जयश्च
विजयश्चोभौ शापितौ मुनिभिः पुरा ॥ अहंकारेण मृदितौ
कुंभकर्ण दशाननौ ॥८२॥ विस्मृतंतु त्वया मूर्ख । ज्ञानपोयनि
रूपितः ॥

भानुगतिः सूर्यचंद्रादिगतिः कुतः कस्य शासनात् भवतीति लोके भूलोके भूलोके विद्यमान जना मोहिता अज्ञान मूर्छिता न जानंति मा जानं त्वज्ञान मोहिताः। ज्ञानिनो जानंत्येवाशनस्य शासनादिति ॥ तावता तव किमागत मित्यत आह। स्थापित इत्यादिना। तेन लक्ष्मी नारायणेन ज्ञान पालत्वे स्थापितः। तवतापि किमित्यतो मदन्योन्तमा भावादित्याह।

तद्वाक्या त्कोपेन नागेंद्र प्रजज्वाल विषोल्बणः ॥८४॥ गर्ह्यन्
वचनैस्तीक्ष्णैर्मुख्यप्राणमहीश्वरः ॥ शेषः ॥ किं गनिष्ठं वचः
प्रोक्तं जीवने छान विद्यते ॥८५॥ कुतो भानुगतिं लोके नैव
जानंति मोहिताः ॥ तथाहं ननवद्वायो। वृथा गर्वं प्रभाषसे ॥८६॥
बले ज्ञाने विनागेन्द्र विष्णुभक्तौ न मे समः ॥

बले ज्ञान इत्यादिना इत्यर्थो बोध्यः। भीषास्माद्वातः पवते भीषोदेति सूर्यः। एतैर्वास्यैवाक्षरस्य प्रशासने गार्गि सूर्याचंद्रमसौ विधृतौ तिष्ठतः इति श्रुतिः। न येति। हे वायो त्वमपि ननवन्तथा भ्रांतः वृथा मृषा गर्वं गर्वितं वाक्यं प्रभाषसे ब्रूषे अयमभिप्रायः। अहं तावत् भूप्रदेशे मलयाचल वासित्वदपेक्षया अति दूरे बहून्नत वैकुंठादिस्थाने हरेः शय्यासनादिरूप स्थितिस्थिति मन्तया गभीन वृत्तित्वात् अति तेजिष्ठत्वाच्च भानुस्थानीयः तं च नन स्थानीयः।

सर्वदांतः पुनो वासः पुत्राणामधिको हरेः ॥ लोकानां हितार्थाय
हितार्थं जगदीशातुः ॥ स्थापितो ज्ञानपालत्वे लक्ष्मीनाराय
णेनच ॥८७॥ विज्ञालोकः स्थितो वापि बहिष्टे भ समो न हि ॥

भ·पु· मद्दत्तनोपि नासि मद्दंतन मावयोः॥ एतादृशस्य तव मन्महिमज्ञाने वें·मा
क उपायः। कूपमंडूकस्येव पानावान गंभीर्य भाने। अतो भ्रांतोसीति॥ १.
अतः समीनानो द्वाना दूनेऽपसनेति यप्रस्तुतप्रसंसा व्याद निंदयोः संकनः॥
तयेत्युक्तोपमया तयोः संसृष्टिः।। नाल्पज्ञोसीति उभयार्थ ब्राह्मानुगु
ण्यात्। बल इत्यादि अनेनाहं त्वत्तोधिकः। सदातनेः अंतः पुनश्रिवासि
त्वात् साक्षात्सेव कला लक्ष्मीवत्। त्वमपकृष्टः सदा बहिर्निवासित्वा
त्यानीकवत् इत्यनुमानद्वयमुक्तं भवति॥८८॥ नाकेवेति लय इति
लीयते आश्लिष्यते वन·· स्मिन्निति लयः आलयः लीङ् श्लेषणे अधिं
करणेऽच् इति योगेन वालय जलं विकानो नाम धेयं गतं श्वुन धान
इत्यादिषु निनरूप सृष्टेर्लयकान गत धानपदेरूप सृष्टार्थानां प्रलय
प्रकान अनुगतापि धानानो ग्रहणा अलयपदेनापिनि। आद्यप्रसे··
रूपसृष्टेनासु यस्य निलयस्य वा ग्रहणाद्वा वा आ इति धातुयोगजार्थ
स्य ङितः दीर्घणाश्लि अनुमानद्वयस्याप्यनेकांत माह। बिडाल इ
त्यादिना वदेत्संतेन। क्रोशसे। बध्वातस्थौ ज्वलन् रूषेति शेषः।

शयानं नल पर्यंके नाजानं नृप सेवते॥ कश्चिद्दूतो नियुक्त
स्तु पर्यंकानूढवान् स्वयं॥ किमाधिक्यं तस्य शेषपुत्रे
कान्यूनतावद॥९०॥ तयोर्विवादमभवच्छेषवाखोर्महा
त्मनोः॥ लक्ष्म्या निबोधितः श्रीमान् उत्तस्थौ गरुडध्वजः॥९१॥
किमर्थं क्रोशसे वीन कः पुमानागतः पनः॥ इत्युक्तो देव
देवेन फणीदेवमभाषत॥

पर्वतार्थं। पर्वतोद्धरणार्थं श्रीनिवासरूप विशेष सन्निधान पर्वत प्र
योजनाय वा। नृपत इत्याद्यनुपदं बहुशः संबोधनं आदनातिशयात्॥१०२॥
के अप्रस्तुत प्रशंसा व्याज निंदयोः संकनः तथा त्वमित्युक्तोपमया सृष्टिः
सहृदयस्य उपालंभस्य सहृदयमेवोत्तनं भवतीति उत्तनत्रापि बिडाल
इत्यादि सार्धश्लोके अप्रस्तुत प्रशंसा व्याज निंदयोः इति दिक्। त्रा
त्रायतामिति॥ भवानिति शेषः॥ प्रार्थनायां लोट्॥ हे स्वामिन्निति संबो
धनं॥ स्वामिन् जगतां पते अनेन स्तुतिः स्वामिन् भवान् मम पुत्रं
त्रायतां त्रायतां। आबाधे संभ्रम प्रवृत्तौ वा द्विर्वचनं॥

शेषः॥ मलयाचल वासस्तु वायुनत्यंत गर्वितः॥अवाच्य
वचनं चोक्तं वायुनात्यंत मानिना॥ एतस्मिन्नेव कालेतु
साष्टांगं प्रणिपत्यतं॥ वायुस्तुष्टाव पुरुषं पुराणं वेद
गोचरं॥ वायुमालोक्य वचनं वानिजाह्योब्रवीत् सुतं॥
किमर्थं कलहः पुत्र शेषेणात्यंत मानिना॥ तूष्णीं बभूव
नृपते वायुनत्यंत भक्तिमान्॥ शेषः॥ अहंसमर्थो भगवन्
बले ज्ञानेच त्वत्प्रिये॥ मत्समो नास्ति भूलोके नाकेवा ब्रह्म
णालये॥ सनीसृप वचः श्रुत्वा प्रोवाच फणिनं हरिः॥
श्री भगवानुवाच॥ न वाङ्मात्रेण पौरुष्यं क्रिया केवल
मुत्तमं॥ बलाबलं परीक्षंते वासवेंदु पुरोगमाः॥

स्थापयामासेति॥ तं गिरिं स्वयमाविश्य यथा न शीर्णः स्यात्तथा स्थाप
यामास॥ मरुतां पतिनित्यनंतनं। मरुत्प्राया हि राजानं भगवानागमिष्य
ति इति ग्रंथः पठनीयः।

अग्नेर्वोन्तर दिग्भागे पर्वतं मेरुनंदनं॥ स्वकाय रज्जुना
बध्वा बलं ते यावदस्ति हि॥ तिष्ठ भद्र महाराजन् विष
फूत्कार जृंभितः॥ हृषीकेश वचः श्रुत्वा हृष्टपुष्टांग वि
भ्रमः॥१००॥ स्वकाय रज्जुना बध्वा आनंदाद्रिं महीपते॥
तमालोक्याग्निदमितः पर्वतार्धमुपागतः॥ आज्ञया वासु
देवस्य देवानां पश्यतामपि॥ कनिष्ठां गुष्ठ संपर्का त्सर्वतो
भोगि संयुतः॥१०२॥ सहस्रमर्ध लक्षंच दक्षिणाभिमुखो
ययौ॥ मेरुस्तुष्टाव नृपते बलदेवं महाबलं॥१०३॥

चित्रकूटकाक कथावत्। स्थूलोयं पंथाः सूक्ष्मोप्यस्ति।

मेरुः॥ त्रायतां त्रायतां स्वामिन् पुत्रं बालं महीपते॥ एवमुक्तो
मेरुणाथ वायुस्तद्गत मानसः॥ शेषेण गिरि पुत्रेण
स्वर्णमुख्यास्त योन्तरे॥ स्थापयामास राजेंद्र गिरिराजं
सपन्नगं॥१०८॥ शेषो गतमदः पश्चात्तुष्टाव मरुतां पतिं॥
क्षमस्व मम दौरात्म्यं अज्ञानेना(न)गतं गुरो॥१०६॥

भ.पु. ञाहे प्रथमे द्वितीये च। तथाहि। क्षमस्वेति गुनो इत्यनेनतं ॥ इति क्षमाप वें.मा.
या मा प्रसादयामासचेति शेषः ॥ उत्तनत्र प्रसादं चेति च शब्द श्रवणात्॥ १.
तद्यथा। तथाहि। मम गिनि जन्म साफल्य हेतुभूतो यो वैकुंठइव
भगवदावासाय तदागमन लक्षणो मन्मनोनथ स्तस्यद तिनतर्कितोपन्न
तैतद्धे शापनाधाब्न स्यादिति ॥ प्रसादं चेति ॥ न केवलं क्षमां अपितु
प्रसादं च। स कीदृशः अविलंबेना गच्छमानो भगवानेतदपनाधा
न्तपो विलंबेनागमिष्यति न सर्वथा क्वानिनिति इत्येवं प्रसादं च च
कानेत्यर्थः।

> निर्वेनत्वा त्प्रसादं च चकान मरुतां पतिः ॥ नाजन्शो
> ष निमित्तेन शेषाचल मिमं विदुः ॥ १७८ ॥

एतेन मरुत्प्राहाद्वि नाजातं भगवानागमिष्यतीति पुनोवादाभावात्कथं मनुवाद इति निरस्तं ॥ एवं व्याख्याने मूलमेतद्व्याख्यानायमाने ब्रह्म पुनाणे प्रथमद्वितीययोः स्पष्टं तत्रैव द्रष्टव्यं। तत्र भगवतैव शेषं प्रतिबद्धि निं प्रत्यागमतोन्मुखं मन्मनो मध्ये तव शेषापनाधान्निवृत्तं तृष्छमनार्थं तत्रैव पर्वत वायव्ये नागतीर्थे वा प्यंतर्गतं मां प्रति तपस्तपतत आगमिष्यामीत्याद्युक्तं ॥ ननु महाशेषस्याप्यहानादि कुत इति चेत् अन्यावेशादिति ध्येयं। ज्ञात रूपानपि सुनान्विना प्राणोक चित्पने। आविशंति ह्यत स्तेषामहानादि न तु स्वत इत्युक्तेः ॥ पंने कामावनयः। एतेन पक्कु साधनस्य वैनाग्याधिपते रुद्रस्येव शेषत्वो त्तन्माहात्म्य ज्ञाने तेच्छा विषयसिद्धिद्वाना इच्छाति बृत्तौ वैनाग्यस्य आत्यंतिकी पनिपक्तिः सिध्यतीति तृतीय दिवसस्वरूपं सूचितं ॥ इति शेषाचल नामसेवा ॥ श्रीः ॥

श्री हरिः ॥ वृषभाचल शृंगाय हृंजनाचलसूनवे ॥ शेषाचल निवासाय वेंकटेशाय मंगळं ॥ नाभूद्दुःख मिति ॥ कुटुंबपोषायच यन्निजायुः न बुध्यतेर्थं विहितं प्रमत्तः ॥ सर्वत्र तापत्रय दुःखितात्मा निर्विद्यते न स्वकुटुंबनामः ॥ पितुर्माता सुहृद्बंधु र्भ्राता पुत्रस्त्वमेव मे। इत्यादि शास्त्रार्थानुसंधानादिति भावः ॥ दैवेनेति। भूसुनस्य पुत्रो भूदित्यनेन महाकुलीनत्वं व्यंजयते ॥ चकानेत्यादि माधवस्य हनेनिदं माधवं। तस्येद मित्यण् नाम लिखितं नामलेखनं ॥ ववृध इत्यादि। चंद्रवदिति ॥ सोमवत्प्रिय दर्शन

भ.पु. इत्यत्रैव वदिष्यत्यय्यं। वक्ष्यापथा तथैवेवं साम्य इत्यमनः॥ अन्यथा चन्द्रे वें.मा.
ण तुल्यमिति व्युत्पत्त्या भिन्न वचन कत्वापत्तेः। तद्दुष्टं। द्वे भिन्ने लिंगव 1
चन इत्यनेन वाक्य दोषे पनिगणनात्। अनेन रूप संपन्न देहत्वत्वरूप
मौज्वल्यं॥ तदुक्तं। अभिरूप्यमकाठिण्य मंगानां चाति मार्दवं॥ एवमादि
गुणावस्था प्रथमे यौवने भवेत्॥ शोभा विलासो माधुर्यं गांभीर्यं सूर्य तेज
सी॥ ललितौदार्य मित्यष्टौ सात्विकाः पुरुषाः गुणाः। इति रूप लक्षणं प्रा
गनुक्रांतं॥ ब्रह्मवर्चसेन देहेन च दिने दिने चंद्रवद्ववृधे तदुक्तं ब्रह्मांडे
षष्ठेऽध्याये॥ यो गुणैः पितरं स्वीयैर्नित्यक्राम दिवौजसा॥ क्रमेण मांसलो
बहूबभान द्विज पुंगवः॥ यौवने समनु प्राप्ते वक्षस्यपि विशालता मित्या
दि॥ वेद वेदांग तत्वज्ञ इति सषडंग वेद पनम तात्पर्य विषयी भूत पनब्रह्म
ज्ञानी। सर्व विद्या विशारदः। अंगानि वेदाश्चत्वारो मीमांसा न्याय विस्तरः॥
पुराणं धर्म शास्त्रंच विद्या ह्येता श्चतुर्दश। ऋग्वेदो यजुर्वेदः सामवेद अथर्व
णश्चतुर्थ इतिहास पुराणः पंचमो वेदानां वेदः पित्र्यो(त्र्यो)राशिर्दैवो नि
धिर्वाको वाक्यमेकायनं देव विद्या ब्रह्म विद्या भूत विद्या क्षत्र विद्या नक्षत्र
विद्या सर्प देव यजन विद्या नामैवै तत्॥ अथागमेति हासंच काव्यालंकार
नाटकं॥ गान शास्त्रं काव्य कृतिः काम शास्त्रं दुनोदरं॥

> कलौ वेंकट शैलेति कथं नाम महामुने॥ शतानंदः॥ पुरापुरं
> दरो नाम सोमयाजी दृढव्रतः॥ कालहस्त्यास्य नगरे सत्यवाक् त्य.
> ब्राह्मणो भवत्॥ अपुत्रस्यापि विप्रस्य नाभूद्दुःखं सुताप्तये॥
> दैवेन पूर्व पुण्येन पुत्रोऽभूद्धस्य भूसुने॥ चकार नाम लिखितं
> माधवं विप्र संसदि॥

देश भाषा लिपिज्ञानं लिपि कर्मच वाचकं॥ गणक व्यवहारौ च स्वर शास्त्रंच
शाकुन मित्याद्युक्त सर्व विद्यासु शब्दार्थ तत्वज्ञान शाली॥ एतेन प्रचंड
प्रसंग पांडित्यं व्यज्यते। महा भाग्यंच। ऋचः सामानि यजूंषि सा हि श्री
रमृता सतामिति श्रुतेः॥ एतेनानधीतं अध्येयं किमपि नास्तीति ना
मविल मुच्यते। अतो न यौवनवंत॥ तत इति। कालांतरे स्नातक कोकाले।
बहुकालं नेमि इत्यनेना नंग विद्या वै शारद्यं व्यज्यते॥ अयं च नायको नस
साधारण्ये धीर शांतः॥ धीर शांतः प्रसन्नात्म धीर शांतो द्विजादिक
इत्युक्तेः। विवेकी क्लेश सहिष्णु र्वा। क्रोधायतनभि भूतांतः करणो वा

भ.पु. उपक्रांतो ऽधोगाद् चलितो वा शास्त्र चक्षुर्वा धीनः ॥ शांत शम प्रधानः ॥

| पुत्रोपनीतो बालस्तु ववृधे चन्द्रवन्नृप ॥ वेद वेदांग तत्वज्ञो सर्व विद्या विशारदः ॥ ११२ ॥ ततः कालांतरे पुत्रं प्राप्त दानं चकार नृ ॥ स चंद्र लेखयानेमे बहुकालंच माधव ॥ ११२ ॥ |
|---|

वें.मा. १.

प्रसन्नात्मा तृष्णांत करणः । श्रृंगारेऽनुकूलः एकायत्तोनुकूल स्यादित्युक्तेः । नायिका स्वाधीन पतिका । आसन्ना यत्त न मणा स्वाधीन पतिका भवेदित्युक्तेः । सुरत सुखास्वादन लोभेनासन्नः प्रत्यासन्नः ॥ आयत्तश्च नमणः पतिः यस्या सा । जातो पांचालः । नायिका च पद्मिनी ॥ पद्मगंध वदना सुकपोला मंदगा तनु षडंगुल गुह्या दान धर्म निरता कृत पुण्या विबुध भाषणा लोला ? नील केशा पृथु श्रोणी स्वेता भरणा भूषिता स्वेतांबर प्रिया साध्वी स्वल्पाहारा सुभाषिणी । कक्षयो गुह्यदेशेषु । तनूरुह विवर्जिता । मधुना हार निरता सदा मधुर भाषिणी ॥ एतां तु पद्मिनीं नारीं पांचालः पुनःषो भवेत् इत्युक्तेः । पंच यज्ञ पर इत्यनेन धर्मैकायत्त चित्तत्व रूपाण धार्मिकत्वं ॥ ११२ ॥ पंचेति ॥ स एष यज्ञः पंच विधोऽग्नि होत्रं दर्श पूर्ण मासौ चातुर्मास्यानि पशुः सोम इति पाठो होमश्रा तिथीनां सपर्या तर्पणं बलिः ॥ एते पंच महायज्ञा ब्रह्मयज्ञादि नामका इति वा युपर्जन्य पृथिवी पुरुष योषिद्रूप पंचाग्नि विद्या वा पंच यज्ञः ॥ एतत्पंच यज्ञपरः ॥ पंच यज्ञ समद्युतिः । सांगोपांगोक्त पंच यज्ञानां मुख्य कल्पानुष्ठानेन यादृशी द्युतिः ब्रह्म वर्चसं तत्सदृश द्युति नित्यर्थः । एतेन तपनं पंच यज्ञ तत्परोपि तु तत्सिद्धोपि इति सूच्यते । पंचानन समद्युतिनिति पाठे । पंचाननः सिंहः बिश्वामित्र वदुग्र तेजसा इत्यर्थः । अनेन अनेन तेजस्वित्वं । द्विसप्त वर्ष इत्यनेन तारुण्यं । विन्यस्तात् द्वैद्वित्व संख्या बोधक शब्दात् मापकां कादुपनि विन्यस्तः सप्तः सप्तत्व संख्या बोधकं । को येषां गण्यमाणानां वर्षाणां तानि द्विसप्तानि तानि वर्षाणि यस्य स तथा । तथाच सप्त विंशति वर्ष इत्यर्थः । आषोडशाग्(शा)द्भवे द्बाल स्ततस्तरुण उच्यत इति मनुः ॥ माधवस्याष्टमे गायत्री गर्भजननं द्वादश वर्षं ब्रह्मचर्यं विंशेष्टा पिन्या चंद्रलेखया पनिणयः । तस्या द्वादशे वर्षे चतुर्विंशो सोपसर्गाभूत् ॥

भ·पु· तत स्त्रिवर्षं गृहे तस्य तया सह रतिः। सप्तविंशेऽतीते कुंतळ्या सह वैं·मा·
वास इति विवेकः। द्वितीय इव भास्करः। अनेन देवतात्मतारूपं मा ९.
हामहिमत्वं इव शब्दः विरुद्धद्वय संयोगे। भवेदेकत्र संयोग इव शब्दो
विरुद्धयोः। धर्मयोः इत्यादि काटक भाष्ये। द्विव्य मूर्ति विकल्पो ननावता
नो भास्कर इत्यर्थः। अत्रेत्थं भासते। माधवोयं प्राग्भीष्मकः। सचनाटूश
पुरु मित्र नामक सूर्यांशः शुच्यावतारः। अयमेव विपुरुनाटूशः पद्मा
वती परिणयोत्सवानंदानुभवाय बकुळावसुनराकाश राजा भविष्यति॥
नाटूशो गोपालः। इति। इत्थं च आकाशदीप इवास्तौ न्न त्यादाकाशे इदानी
मपि राजत इत्याकाश राज इति नामाप्यनुकूलं भवति।

> पंच यत्पत्नी नित्यं पंचानन समद्युतिः॥ द्विसप्त
> वर्षो राजेंद्र द्वितीय इव भास्करः॥

अत एवाह नारदः सर्वशीर्ष समन्वितं इति॥११२॥ साकन्येति॥पांड
वानां प्रिया द्रौपदी यथा कन्या तथा पांड्यदेशीय सा चंद्रलेखापि कन्या॥
महापातक नाशनाय सदा पंचकन्या वत्स्मर्तव्ये त्यर्थः। अन्योऽर्थः स्पष्टः
उपलक्षणतया तस्याः पतिव्रतमाह। पता विति। पतिनित्यारण्यात्तः पतिः॥
तत्पर इति। अभूदिति शेषः। राजपुत्री मित्यनेन भोगसाधन वित्त सं
पत्तिरुक्ता भवति। राजन्निति जनसंबोधनं पदे पदेत काननं तु श्रोतृ
णां केषांचिन्निद्राग्य वैषम्यात्तत्रापि वृद्धानां विशेषादागत निद्रादि नि
वृत्तये प्रकृतस्य राज्ञो वृद्धत्वादातंका त्प्रजागरावेशेन रात्रौ निद्राभावा
च्च बोध्यार्थस्य दुर्गमत्वाद्वाय थासेस्म्येत्यादिवत्। शनीनमिति॥श्लेष्मा
गारं मुखं प्राहुः मांस ग्रंथी कुच द्वयं। दृक्संभाषणा चेष्टाश्च हासः पर्य
टनं तथा॥ केश दंताश्च नारीणां सर्वथा पाप हेतवः॥ यन्मैथुनादि
गृहमेधि सुखं हि तुच्छं कण्डूयनेन करयोरिव दुःख दुःखं। तृप्यंति (प्यं)
देहकृपणा बहु दुःख भाजः कंडूतिवन्मनसिजं विषहेत धीरः॥
इत्यादेः। विध्यभावेपि रागतः प्राप्तत्वाद्रोजनादिवदा दृर्त्तव्य इ
त्यतो निषेध माह। तथापि दिवस इत्यादिना। अहोरात्रैवै प्रजापति
स्तस्याहरेव प्राणो रात्रिरेव रयिः प्राणं वा एते प्रस्कंदंति ये दिवारत्या संयु
ज्यंत इति श्रुतेनयुक्तां निषिद्धां। स्मार्तमपि निषेधं स्मारयति निकेतन इति॥

भ-पु. पानं पर्यायपदेशः स्यादैति ह्य मिति हाव्ययं ॥ इतिहासः पुनावृत्त मिसमनः ॥ वें-मा
तदस्मिन् अस्तीति इतिहासं ॥ अर्श आद्यच् । यद्वा इतिहासवदाचर ५.
तीति इतिहासं । आचारार्थे क्विप् । अथ वार्षो लिंग व्यत्ययः ॥ नान्य
द्दोषं भवेदत्र मृगेभ्यो ऽन्यत्र विधिर्वै इति नामायणो । श्रुणेतिद्वत् ॥

> गंगा स्नानं लेखनेन पात्रा सनूस मेव च ॥
> इति हास मिमं प्रोक्तं गौतमेन मयोदितं ॥
> पुण्यं परम कल्याणं श्रवणाच्छुभ दायकं ॥ ७९३॥

ॐ इति श्री भविष्योत्तर पुराणे वेंकट गिरि माहात्म्ये ऽध्यायः प्रथमः ॥
॥ हरिः ॐम् श्रीः ॥

तथाच गौतमेन प्रोक्तं पुरावृत्त मिदं तुभ्यं मयेरितं । श्रवणाच्छुभ
दायकं पुण्यं सुकृत हेतुः परम कल्याणं ॥ संपूर्ण नौग्य सुख साधनं ।
कल्य मानौग्यं सुखं वा अणति कल्याण मिति टीका सर्वस्वकारः ॥ शुभ
दायकं । अभ्युदय हेतुः । इति हास मिम मिति पाठे श्लोक द्वय मेकं वाक्यं ।
हे राजन् राजेंद्र । श्रवणाच्छुभ दायकं । परम कल्याणं । पुण्यं । भूधनं
प्रति गौतमेन प्रोक्तं मया तुभ्य मीरितं इम मिति हासं यः कीर्तयति ।
तस्य पुण्य फलं वक्ष्ये (क्ष्ये) व्याख्यास्ये श्रुणु । गंगा स्नानं लेखने प्रदक्षि
णा सहस्र मिति अशेषमति कल्याणं ॥ श्री वेंकटेशाय मंगळं ॥
वृषभाचल श्रृंगाय अंजनाचल सूनवे । शेषाचल निवासाय वेंकटे
शाय मंगळं ॥ ॐ ॥ पूर्णः श्री वेंकटेश माहात्म्यस्य भविष्योत्तर पुरा
णस्य व्याख्याने कल्याणकांड दीपे प्रदीप संपादनं नाम प्रथमोध्यायः ॥

**श्री भारती रमणांतर्गत श्री कृष्णार्पण मस्तु ॥ श्री श्रीनिवासाय नमः ॥**

पादीन्मध्यमलीताद्रि नृसिंहार्य प्रकाशित ॥
कल्याण कांडदीपे गत प्रथमाध्याय लेखनम् ॥
वेंकटेशो नानी जर्ति यमतो गणिमेऽप ॥ प्राणारु भगसोय श्रीन्
सिंहार्य गुरुस्सदा ॥ ध्य

+ व्याख्यान लेखनेन श्री ताशी सत्संधगुर्वंतर्गत
जातकी जातिः प्रीयतु ॥

मूलिका श्रीनिवास
बाळाचार्य

॥ काळयुक्ति संवत् ज्येष्ठ शुद्ध २. बुधवार ॥

नमस्ते यज्ञरूपाय यज्ञभोक्त्रे नमोऽस्तु ते॥ यज्ञकर्त्रे नमो यज्ञविद्याय च नमो नमः॥ वैकुंठशेषाचलस्थानयोगयोर्हेतुप्रकारा विद्वल्लोकसम्मतौ॥ उक्थं तद्इति वा एतद्गिरिवर्यगौरवं पूर्वापरीकारनिदानचोदनात्॥ केशवाय नमस्तेऽस्तु हृषीकेशाय ते नमः॥ वासुदेवाय महते श्रीनिवासाय ते नमः॥३॥
पूर्वाध्यायेन सहसन्निहितेन प्रसंगसंगतिमाह॥ मरुदिति॥ यद्यपि दुहितुस्तव कन्याणामित्यादिना द्वितोपि पूर्वेणास्य संगतिरियमस्ति तथापि सूचीकटाहन्यायेन तदुपोद्घातया च सन्निहिते नैव सोक्ता शेषाचलयोगस्य वैकुंठत्यागपूर्वकत्वात्त्र श्नक्रमोल्लंघनमुत्तरस्य नरे च मरुत्प्राहेत्यादिनपूर्वं श्रूयते कथं तदनुवाद इति वाच्यं पूर्ववृत्तस्यापि यस्योत्तरत्रावश्यमनूद्यता विवक्षिता तस्य पूर्वमनुक्तत्वेपि दोषाभावात्॥ पूर्वमनुक्तायाः॥ चित्रकूटकथायाः सुंदरेऽनुवादात् इयमपि शतरीतीनां मध्येका च न रीतिः। स्थूलेयं यः सूक्ष्मोऽन्योपि उक्तो ज्ञेयः। विस्तरात् विस्तरमवलंब्य॥१॥ कथमिति शेषगिरिमिति शेषः। केन प्रकारेण कथं। हे मुने नारायणः शेषगिरिं कथं चतुर्भुजो द्विभुजो वा॥ असहायः ससहायो वा मानुषलीलो अमानुषलीलो वा केन प्रकारेण प्राप्तः॥ कारणाद्वाकस्मात् कारणं वा किमिति यावत्॥२॥

॥ श्री निवासाय मंगळम्॥

> जनकः॥ मरुत्प्राह हि राजानं भगवानागमिष्यति॥
> इति त्वयोदितं पूर्वं तन्ममाचक्ष्व विस्तरात्॥३॥ कथं नारायणः प्राप्तः कस्माद्वा कारणान्मुने तत्रागस्य कृतं कर्म तन्ममाचक्ष्व भूसुर॥२॥

कथं वैकुंठलोकमिति। कथमित्याक्षेपे। तादृशलोकत्यागे
श्व किं बलवद्बाधकमिति प्रश्नवसायी। चरितमिति। तस्य वैकुंठत्यागिनः तस्यागोपयोगिचरितमिति यावत् पर्वतस्य तीर्थानां च माहात्म्यं वराहरूपिणो विष्णोर्माहात्म्यं वद विस्तरादाकाशराज इत्याद्युत्तरात्वयि। आतुरित्युपलक्षणम्

भा.पु. तत्पुत्रस्यापि महामुन इत्यंतः स्पष्टः । आकाशराजादयो यूयमिवकेच वें. १
न मानुषाः तन्माहात्म्य श्रवणेन तव किमित्यत आह ॥ पुण्याश्चेति । २

कथं वैकुंठलोकं तु त्यक्तवान् पुरुषोत्तमः ॥ चरितं तस्य माहात्म्यं तीर्थानां पर्वतस्य च ॥ वराहरूपिणो विष्णोर्माहात्म्यं वद विस्तरात् ॥ आकाशराजश्च चरितं भ्रातुस्तस्य महामुने ॥ पुण्याश्च पुरुषश्रेष्ठा जामाता च जगत्पतिः ॥ देवानां च ऋषीणां च देवर्षीणां समागमं ॥

श्रवणेन तव किमित्यत आह ॥ पुण्याश्चेति ॥ येषामिति शेषः । येषां जगत्पतिः जामाता तस्मात् ते पुरुषश्रेष्ठाः । अतः पुण्याश्च स्वश्रवण कीर्तनाभ्यां सुकृतहेतवः । यस्य पुत्री जगन्माता जामाता च जगत्पिते ति पाठे अयमपि राजाकश्च नानुष्ठा मानुषः तव तन्माहात्म्य श्रवणेन किमित्यवत । रिकाक्रमः ॥ वैकुंठाद्धसु धरागमन कारणमाह ॥ शतानंदः । पुरात्विति । पुरा द्वापरांते कश्यपादि मुनीश्वराः कश्यप आदिः येषां ते कश्यपादयः ते च ते मुनयश्च कश्यपादिमुनयः । सप्ततंई श्वरा येषां ते तथा यद्वा ऋषयः सत्यवचस अतीतानागतज्ञा वा मुनीनामीश्वराः तथा कश्यपादयश्च ते मुनीश्वराश्च तथा इति वा ॥ सर्वे ऋषयः जाह्नवीतीरे द्विजा अपि अनेक बुध्यपि अस्मिन्यज्ञे बहुभिः दीयमानं न्यायार्जितं यद्दीयं द्रव्यं बहूल्पमिति न विवादः । किं वा भवतु सर्वथा कार्ये दृष्टिः इति संतोषात् संतोष मवलंब्य । यद्वा येषां आप्तव्यं नाप्तमिति असंतोषो नास्ति तथा पि देशकालद्रव्य देवानुगुण्यातिशयं दृष्ट्वा प्राप्तानां ज्ञानादीनां समृद्धिरस्त्विति संतोषादित्यर्थः । सुमखं सुसात्विकं मोक्षसाधन ज्ञान भक्ति वैराग्य समृद्धि हेतुं मखं सत्रयागं चक्रिरे चक्रुः । ऋद्धि कामाः सत्रमासीरन्निति विधेः ॥ षडभाग सुकृत लोभात् ॥ अप्रतिग्र हाणां तीव्रारकुम्भषायारण्यक धान्यानां ऋषीणामेकस्य बहुधन साध्य मखपर्याप्त धनाभावात् प्रायः सत्रयागं कुर्वीरन्निति उपपत्त्या मखं चक्रिर इति बहूनां कर्तृत्वोक्त्या चात्र मखशब्दः सत्रपरः ननु फला र्थित्वान्तु कर्मणः शास्त्रं सर्वाधिकारं स्यादित्यधिकरणे सोधि कारः । किं सांग कर्मानुष्ठान समर्थानां तिरश्चामृषि देवांध बधिर मूक पंग्वादीनामपि उत समर्थानामित्यादि संशयपूर्वको टौ ऋ ष्युदाहरण विरोध इति चेन्न ॥ ऋषीणां पूर्वा त्र्यष्यादि वरणाद

शतानंदः॥ पुरातु ऋषयः सर्वे कश्यपादिमुनीश्वराः॥ सुम खं जाह्नवी तीरे संतोषाच्चक्रिरे द्विजाः ॥ तस्मिन्काले मुनिश्रेष्ठान् नारदो मुनिसत्तमः ॥ उवाच वचनं तेषां किमर्थं यज्ञमुत्तमम् ॥

यत्कामारूषयः सत्रमासततदर्थं हरिप्रेरितोनारदः तेषांन त्वाव बोधाय तेषामेव मतमवलंब्य पूर्वोत्तरपक्षक्रमेण पृच्छतीत्याह ॥ तस्मिन्निति ॥ तस्मिन्काले मखानुष्ठान समये । मुनिसत्तमो नारदः सदस्यान्मुनिश्रेष्ठान्प्रति । तेषां ऊमित्यात्रेयोडुलोमि बादरायणादीनां सिद्धांतसंबंधि वचनमुवाच । किंतद्वचनमित्यत आह ॥ किमर्थमित्यादिना मुनिसत्तमा इत्यंतेन । हे मुनिसत्तमाः राजसस्तामसो वा यज्ञस्तावदस्तु अफलाकांक्षिभिर्यज्ञो विधिदृष्टोय इज्यत इत्यायुक्तमुत्तममपि यज्ञं किमर्थं कस्मै प्रयोजनाय यष्टारो यजंते इयं क्रियागम्यमाना अपि कारकविभक्तेः प्रयोजिका ॥ तथैव न्यासे योत वचनात् । किमर्थमित्याक्षेपः । न किमपि प्रयोजनमित्यर्थः ॥ यद्यस्ति प्रयोजनं तर्हि षड्बालंबनं पश्नंकरोति । के भुंजत इति । समर्थासमर्थसाधारण्येन फलार्थिनः सर्वे तिर्यग्न्यंग देवाअपि ॥ १॥ सांगकर्मानुष्ठान समर्थामानुषा एव २ ऋत्विजोपि ३ धर्ममही पाला अपि ४ देवाएव ५ समर्था अर्थिनः सर्वेपीति तत्तसिद्धांतन्यायतः प्राप्तानां एषांके यज्ञफलं कर्मजापूर्व परिपाकफलं भुंजते भोगोप भोगात्मसात्करणेषु भुजोनवनइत्यात्मने पदं ।इतिषड्बालंबी एकः प्रश्नः । को भुंजत इति पाठे एकवचनं बहुत्वे यद्वाभुजीति इदितो धात्वं तरस्येदं हापि रूपमेकवचनं । अथवा कः कालपाशमासज्यकंठे मोहान्न जानतेइतिवत् बहुवचनमार्षं । को भुंक्ते यज्ञफलं । ब्रह्मावा हरोवा हरिर्वेति स्पष्टोर्थः अस्मिन्पक्षे उत्तरवाक्यद्वयमस्यैव प्रपंचः॥ यद्येको देवः सर्वांतर्यामी इतिमुख्यं मतं तदापृच्छति ।कोवा ध्येय इति । सर्वांतर्यामितया भोक्तृत्वेन ध्येयः। सुरोत्तमः कोवा । हिरण्यगर्भोवा हरोवा हरिर्वा इति त्रिकोद्यालंबी द्वितीयः॥

भ॰पु को वा ध्येय इति द्वितीयं प्रश्नं स्वयमेव व्याख्यातिकृतमिति। कृतं निष्पन्नं यज्ञफलं यस्यार्पते। यद्देवता क्रियते हिरण्यगर्भ त्वा वा हरत्वा वा हरित्वा वेत्यर्थः। यस्य अर्पत इति संध्यभावो वाक्ये तु सा विवक्षामपेक्षत इति वचनात्साधुः। आर्षत्वाद्वा। भोग अदन पानादिः अन्नादेः उपभोगः। भक्तुं दन वनितादीनां धारणा चर्चना लेकनादिः अन्यदीयस्य कालांतर भोग्यस्य पालनताया त्मा धीन तया स्थापन मात्म सात्करणं। किमर्थमित्याक्षेपे द्रव्याणां कर्म संयोग इत्याधिकरणोक्त धात्वर्थस्यैव भाव्यत्वं पद श्रुत्या प्रतीयते। स्वर्गादेः खलु। वाक्येन श्रुतेः वाक्यं च दुर्बलं। भूतं च स्वर्गपश्वादि द्रव्यं भव्याय कर्मणे उपदेश्यं न भूताय भव्यकर्मोपदेशनमिति न्यायो हेतुः। ३॥ यद्यस्ति प्रयोजनमित्युक्ते यां अस्य पदश्रुतेर्बलीयस्या विधिश्रुत्या हि भावना॥ अवरुद्धा न यागादि भाव्यमालंबितुं क्षमा। स्वर्गादिः। कामनायोगात्फलत्वेनैव गम्यते। वैं॰मा॰ २

(के) को भुंजते यज्ञफलं को वा ध्येयः सुरोत्तमः॥ कृतं यज्ञफलं यस्य अर्प्यते मुनिसत्तमाः॥ इति नारद वाक्यं तु श्रुत्वा ते मुनिपुंगवाः॥ संशयार्थं समापन्नाः कथमत्र विचार्यतां॥

स्वरसात्पुरुषाणां हि कामना फलगोचरे त्ये तदधिकरण सिद्धांत न्यायउन्नायकः। षट्के त्वालंबि प्रश्ने पला र्थि त्वात्कर्मणः शास्त्रं सर्वाधिकारं स्यादित्यधिकरणोक्तेन तत्र प्रधान वाक्ये न सर्वेषामधिकार धीः जायते तदुद्देशेनांग वाक्यानामुपवर्णनं इत्यादि न्यायस्य प्राप्तिः॥२॥ पुरुषार्थैक सिद्धत्वात्तस्य तस्याधिकारः स्यादित्युक्तन्यायेन आर्त्विज्यमित्योडलोमिः तस्मै हि परिक्रियत इत्युक्तन्यायाच्च र्त्विजां प्राप्तिः॥३॥ मरीचपादिमताद्धर्म महीपालानां॥ ४॥ स्वामिनः फलश्रुतेरित्यात्रेय इति न्यायादेवानामेवेति प्राप्तं॥ ५॥ सहकार्यंतर विधिः पक्षेण तद्वतो विधानादित्यनेन षष्ठस्य॥६॥ गुहां प्रविष्टा वित्यादिना एको देव इत्यस्येति प्रकृतमनुसरामो ज्योज्जीवाद्मः॥ इति नारद वाक्यं प्र म॰ श्नरूपं श्रुत्वा ते मुनिपुंगवाः। संशयार्थं यद्यपि नारदागमन

मत्तानाथापद्पहारि तत्वज्ञानादि संपत्कारि नराणां इदं
नारं अज्ञानादि तद्यति खंडयति ज्ञानोपदेशनेति नारदः॥
तदुक्तं नारदीये। गायन्नारायणकथां सदापापभयापहां॥ ना
रदो नाशन्नेति नृणामज्ञानजं तमः॥ नरतीति नरः प्रोक्तः
परमात्मासनातनः॥ इतिवचन्नरः परमात्मा तस्येदं नारं पर
तत्वविषयकंज्ञानं तद्ददात्युपदिशति इति नाम निरुक्तेश्च।
तथापि संशयायेदं संशयार्थं अर्थेन नित्यसमासो विशेष्य
लिंगताचेति वचनात्समासः। इदं जातमितीति शेषः॥
अनेन वाक्येन विशेषदर्शनाभाव सहकृत साधारण धर्मव
द्धर्मिणि विरुद्धनानाकोटिज्ञानजननात्। तत्वसंशयायेदं
जातमिति समापन्नाः नानाविधोपाय चिंताव्याकुलचि
त्ततया मनोव्यथात्क्षणापत्प्राप्ताः। आपन्न आपत्प्राप्तः
स्यादित्यमरः॥ यद्वा संशयार्थं संशयहेतुं अर्थशब्दो हेत्व
र्थः अर्थः स्याद्विषये मोक्षे वस्तुहेतुनिवृत्तिष्विति वैजयंती॥
विरुद्धनानाकोटिज्ञानं प्राप्ता इत्यर्थः॥ संशयार्थमित्यस्यावृत्तिः।
संशयार्थं संशयस्य अर्थः निवृत्तिः संशयार्थः सोऽर्थः प्रयो
जनंयस्य तत् तथासंशयनिवृत्यर्थं ननु संशयस्यार्थो निवृत्ति
र्यस्मादिति विग्रहं कुतो नाद्रियंते चिरंतनटीकाकारा इति चेन्न
अभिप्रायसद्भावात् तथाहि अप्रथा विभक्त्यर्थे समानाधि
करणानां बहुव्रीहिरिष्यत इतिवचनात् समानाधिकरणबहु
व्रीहावेविष्टिः सूत्रकारादीनां कथं तर्हि कंठेकालः चक्रपाणिः
पद्मनाभः पद्मगंधिः इत्यादौ व्यधिकरण बहुव्रीहिरितिचे
त् हलदंतादित्यादि ज्ञापकात्। नचैकत्रोक्तन्यायः। ज्ञाप
सिद्धं नसर्वत्रेति परिभाषाविरोधात्। अन्यथा पंचभुक्त
इत्याद्यपि बहुव्रीहिः स्यात् हेतुः साध्याभाववदवृत्तिरि
त्यादौ त्वगतिका गति र्व्यधिकरण बहुव्रीहिः॥ नचात्र
तथेत्यसौ (ऊ.ए) ऽर्थभेदे शब्दभेद इति पक्षमाश्रित्य
न्यायसिद्धया वृत्त्या समानाधिकरणबहुव्रीहिरेवाश्र
यणीयेति॥ उक्तंचेदं श्रीमद्विजयींद्रतीर्थश्रीमच्च
रणैरिति केचिदत्र एतत्संशय निवृत्ति विशये कथं

२. नैवाज्यावेक्षणादीनां पुरुषं प्रति चोदना यतोऽसमर्थः तच्छून्यं कर्मकृत्वाधिकार
भाक् इत्येतदधिकरणन्यायेन द्वितीयस्य २.

भा.पु. कर्तव्यमिति वचनमूचुः। एतत्संशय निवृत्तिः केनोपा वै.१॥
येन स्यादिति वचनाभिप्रायः॥ केचिद्विचार्य तामित्यूचुः २
एतत्संशय निवृत्तिः। केनोपायेन स्यादिति वचनाभिप्रा
यः॥ केचिद्विचार्यतामित्यूचुः। वादआरभ्यतामित्यभि
प्रायः। एवं विचारे प्रचरति सति एष विमर्शो जातः। बहु
वो हैरण्यगर्भाः हिरण्यगर्भतः संति। तद्धर्माः शैवा
शिवतः। केचिदेव पंचरात्रिका विष्णुतः एवं च वादः कालेन प
च्यते। यज्ञकालो विलंबते। भाजकृतत्व निर्णयः कथं स्यात्।
विचक्षणवतीं वाचं वदेच्चक्षुर्वै विचक्षणं वि ध्येते नप श्य
तीत्येतद्वै मनुष्येषु सत्यं निहितं यच्चक्षुस्तस्मादाचक्षाणा
माहुरद्रागिति स यदर्शमित्याहास्य श्रद्धाति यद्युवै स्वयं प
श्यति न बहूनां चनान्येषां श्रद्धाति तस्माद्विचक्षणमेव वा
चं वदेत्सत्योत्तराहैवास्य वागुदिता भवति॥ इति श्रुतेः॥
श्रुतामनुमितामपि शीतां प्रत्यक्षतस्तां पुनरेव द्रष्टुं त्यादि
महदाचाराच्च सिद्धप्राबल्यवत्प्रत्यक्षप्रमाणसिद्धे नैव हेतु
नास्यादिति॥ ततः किमभूदित्यत आह॥ संमिलित्वेति। तदा
नवस्थित नानाविध वचनसमये सर्वे मिलित्वैकमत्यं प्राप्य
ब्रह्मविदां वरं भृगुं उपसंगम्य तं प्रति भक्तितम्रागाः। भ
क्तिभरेणानात्त शरीराः। कृतांजलिपुटाः भूत्वा स्थिताः संतः
वक्ष्यमाणं वचनमूचुः॥ वचनप्रकारमाह॥ गच्छेत्यादिना॥ हेमह
बुद्धे अत्यंत निश्चितमते मुने परं परमपरार्थ रसतमं। सुरान्त
मं देवश्रेष्ठं वेत्तुं निश्चेतुं विघ्न ब्रह्मनादि बालशंकिता न्वि
हाय। हरिहर हिरण्यगर्भेषु क उत्तम इति निश्चेतुं यश्चो
चितं लोकान्शीघ्रं गच्छेति योजना॥ ७॥ अत्र विप्रतिपन्न
जन बाहुल्या बाहुल्याभ्यां मुनेर्लोकगमन पौर्वापर्य बोध्यं॥
तथाच सत्यं जगामेत्याह। इति तेषामित्यादिना जगामेति शे
षः॥ अग्रजं अग्रजन्मानं अनेन महद्देत्वभिजन उक्तः। चतुरा
स्य समुद्भूत चतुर्वेद घोष विराजितं अनेन मदनिदान भूता
विद्योक्ता। अपां पतिरिति। व दिशां पाला इति दिक्पालानां
वाक्यं नाम। दिशां पालगणैः साई अनामयं जगदीशानं

भ.पु. नारायणं स्तुवंतं चतुरास्य समुद्भूत वेदघोषविराजितं किरीट मकुटोज्वलं। किरीटान्येव मुकुटानि तैरुज्वलं मकिमं वं.भा २.
डते मकेरूट न्नलोप श्चेत्यनेनोटन्। योगिकोयं भूषण
सामान्यार्थः। तथाचकिरीट भूषणोद्भासितमित्यर्थः॥१॥य
द्वोत्तरपदे मकुट शब्द श्रेष्ठवाची किरिटेषु मकुटा श्रेष्ठाः
तैरुज्वलं श्रैष्ठ्यंच नारायणां घ्योरन्यत्रानम्रत्वं स्युरु
त्तरपदे व्याघ्रपुंगवर्षभकुंजराः सिंह शार्दूलनागाद्याः पुंसि
श्रेष्ठार्थ वाचकाः इत्यमरोक्तेः। विद्वन्मुकुट इत्यादि प्रयोगाच॥२॥
अथवा किरीटपदेन ये नौर्ण कार्पासादि मृदुशिरोवेष्टा न्युच्यं
ते। तथाच किरीटानामुपरितनानि किरीटोपरि तनानि तानिच
तानि मुकुटानिच किरीट मुकुटानि इत्युत्तरलोपी तैरुज्वलं॥३॥
अथच चत्वारि किरीटानि तेषां यन्मुकुटं मंडनीभूतं पंचम
शिरोध्यधिक्षिप्तं किरीटं तेनोज्वलं॥४॥

सम्मिलित्वा तदा सर्वे भृगुं ब्रह्मविदां वरं॥ तामूचुर्भ
क्तिनम्रागाः कृतांजलिपुटास्त्विह॥ गच्छ शीघ्रं महाबुधे
परं वेत्तुं सुरोत्तमं॥ इति तेषां वचः श्रुत्वा भृगुः कंजज मं
दिरम्॥ तत्र दृष्ट्वाष्टबाहुं तं साक्षाद्ब्रह्माणमग्रजं॥ चतुर्मुखमु
दारांगं सरस्वत्यानुसेवितं॥ चतुरास्य समुद्भूतवेदघोषविरा
जितं॥ दिशां पालगणैः सार्ध (र्द्धं) किरीट मकुटोज्वलं॥
स्तुवंतं जगदीशानं नारायणमनामयं॥ तं नत्वा भक्तिभा
वेन मददीप्त्या विराजितं॥ पतितं स भृगुं दृष्ट्वा नोवाच
वचनं विधिः॥ तं मत्वा किंचिदज्ञानमाश्रितं स ऋषिर्ययौ॥

शिरोध्यधिक्षिप्तं किरीटं तेनोज्वलं॥४॥ किंच किरीटानां
उपर्यपि यानि मुकुटानि वैशिष्ट्य निमित्तानि तैरुज्वलं
अयं भावः॥ देवानां मूर्धानः किरीटिनः मुक्तियोग्य जीवोत्त
मत्वात् ब्रह्मणस्तु किरीटा अपि सर्व जीवोत्तमत्वात्
हरेस्तु किरीट किरीटोपि किरीटी सर्वोत्तमत्वात् ब्रह्म
णो द्विबंधुर इति यावत्॥५॥ सरस्वत्यानुसेवितं।
उदारांगं चतुर्मुखं। अष्टबाहुं। साक्षाद्धरेरग्रजं अग्र
जन्मानं च तं प्रसिद्धं। ब्रह्माणं दृष्ट्वा मददीप्त्या विरा

भ· पु· जितं हर्षमोदसंकरो मदः श्रुतधनकुलकर्मजः वैं.गा. २
तस्य हीसिरुत्कर्षः तया विराजितमपि विगतो चि
त्यमपि यद्यपि भदो नमन्तं नाभिवादयेत्। तथापि भ
क्तिभावेन तं नत्वा स्तुत्वा प्रणनामेति शेषः। विप
र्ययेणवेति ॥ पतितमिति ॥ विधिः यथा हरिचिन्त
ब्र विधानतः। सब्रह्मा प्रणतमपि भृगुं दृष्ट्वा न किंचिदपि वच
नमुवाच तमिति तूष्णीं भूतं ब्रह्माणं न मत्वा किंचित् ईषत्
अज्ञानं कर्तृ तमाश्रितं मत्वा यद्वा कर्म द्वितीया श्रितेति द्वितीया
अज्ञानं आश्रित्यांगीकृत्येव वर्तमानं अयमीषदज्ञानवान् कर्त
व्याकरणादित्यनुमाय मत्वा नायं सर्वोत्तमः अज्ञानादित्यनुमा
य सर्षिर्ययौ निर्ययौ तल्लोकादिति शेषः॥ कैलासेति॥
सर्षिः कैलासगिरिमासाद्य निजमंदिरे काममंदिरे पार्वती
सार्धं पार्वत्या सार्द्धं पार्वतीसार्द्धं स्तं सहस्य मध्यनिपातः
अर्धनारीश्वरं क्रीडंतं कामुकमुत्कटेच्छायुक्तं दृष्ट्वा स्तुत्वा नमा
मेति शेषः। क्रोधात्ताम्रविलोचनः। वधादिपर्यंत क्रूरजनाश्रय
मनः प्र... ज्वलनेन अरुणीकृतविषमलोचनः काममिव तं हंतुं
शीघ्रमाद्रवत्। ऋषिशापनिराकृतः ऋषेः शापेन आक्रोशे
न महादेव इति भक्तिभावेनागताय मह्यं कथं द्रुह्यसीति
विरुद्धात् ध्यानेन निराकृतः निवृत्तो भूदित्यस्ति॥ शशापे
त्यादि॥ सः ऋषिः शंभुं ब्राह्मणं लोकैः त्वं नैव पूज्यस इति

कैलासगिरिमासाद्य तत्र दृष्ट्वा त्रिलोचनं। कामुकं पार्वती
सार्धं क्रीडंतं निजमंदिरे॥ आगतं सा मुनिं दृष्ट्वा पार्वती
लज्जया वदत्॥ त्यज शीघ्रं महाबाहो आगतो मुनिपुंगवः॥
इति तस्या वचः श्रुत्वा क्रोधात्ताम्रविलोचनः॥ तं हंतुमाद्रव
च्छीघ्रमृषिशापनिराकृतः॥ स शशाप स ऋषिः शंभुं लोकैः
त्वं नैव पूज्यसे॥ त्वच्छिश्नपूजने नैव लोके ख्यातिं गमिष्यसि॥
इत्युक्त्वा स ऋषिश्चागात् वैकुंठ हरिमंदिरं॥ तत्र गोपुरसाहस्र
तोरणादिविराजितं॥ चतुर्दिक्षु चलद्द्वारपालकै रूपशोभितं॥
तत्र शय्यागृहे दिव्ये रमासार्द्धं रमापतिः॥ तताडोरसि गोविं
दं भृगुः पादतलेन तं॥ ताड्यमानो हरिः साक्षादुत्थाय ऋषि
पुंगवं॥ पपात पादयोर्भक्त्या ऋषिपादसरोरुहे॥

शंभुं ईशानं। त्वच्छिश्नपूजनेनैव त्वच्छिश्नाकारलिंगार्चनेनैव। लोके मानुषे ख्यातिं गमिष्यसीति। शंभू ब्रह्म त्रिलोचनः इत्यमरः॥ शापप्रसंगादुभावपि शप्तवानिति भावः। ब्रह्मकृतौ दासिन्येनां कुरितो ऋषे रोषद्रुद्राद्रो हेमे दूरीकृत इदानीं फलित भावः। इत्थमपि काचन रीतिः पुराणादौ दृष्टः। शंभुमिति पाठे लोकैः त्वं स्फुटं स्फटिकेत्यायुक्त वपुषा नैव पूज्यसे परंतु लिंगपूजनेनैव ख्यातिं प्रसिद्धिं इत्यर्थः। ततो मुनेरेष विमर्षो जातः। ननु विमृश्यकरणाविरोधः। तस्य रोषदशाविषयत्वात्। तत्किं वा भवत्सकीदृशो विमर्शः। तथाहि ब्रह्मा मां भक्त्या प्रणतं नकिंचिदुवाच। रुद्रो मह्यं दुद्रोह। विष्णुः यद्यपि मां दृष्ट्वा मदुचितसत्कारं कुर्यात्तथापि न तावता सर्वोत्तमत्वसिद्धिः किंतु यदि मया महाद्रोहेन द्रुह्येत् तर्हि सास्यात्। अतः कथं मम महाद्रोहघटना तत्परीक्षानुकूलास्यादिति अतः सर्वज्ञो हरिरेतदागमनकाले शेत इवादृश्यत इति भावः। रमासाद्र्धं अशेत इति शेषः। आङः पूर्वसवर्णः॥ इत्येवं चक्रिरे यज्ञमर्पणं जगदीशतुः इति एवमुक्तात् ईर्त सर्ववैलक्षण्यविशिष्ट सर्ववैशिष्ट्या-कारणात् जगदीशतुरर्पणं कुर्वंतो यत्नं चक्रुरित्यर्थः। ग्रामं गच्छन्तृणं स्पृशतीत्यत्रेव तथायुक्तं चानीप्सितमिति द्वितीया। तदंतरेति। तस्माद्विष्णोरंतरमभ्यंतरं ज्ञानानंदादि गुणगणानां व्यवधानं यस्याः सा तदंतरा। तदंते तस्या रमाया अंते अंतिके अग्रे तदंतरे ज्ञेये एवं तरतमा ज्ञेया इति। प्राकृतातिशयित धर्मविशिष्टाद्प्यतिशयित तादृश धर्मविशिष्टवाची तरप्तमबतिरिक्तस्तरतम शब्दः। अन्यथा तारतम्य शब्दनिष्पत्तेः एतदुक्तं सुधायां तृतीयस्य तुरीय चतुर्थे। तरतमशब्द इव दघ्न शब्दोप्यप्रत्ययोस्तीति। यादुपत्ये च तरप्तमप्प्रत्यभिन्नस्तरतमशब्दोस्तीति। तथाच हरिः श्रीनिवासः सर्वोत्तमः स्वान्यनिष्ठोत्कर्षोत्कर्षानवधिकोत्कर्षवान् रमादेवी साक्षात्तदंतरा तन्निष्ठोत्कर्षादतिशये

वें·गा॥ २

भ.पु. नापकृष्टान्यो त्कर्षा नवधिक तन्निष्ठो त्कर्षा दृष्यतिशयेनाप | वें.मा
कृष्टो त्कर्षवती तस्मात्साक्षादतिशये नावरे ति यावत्। तस्मा २
त्साक्षात्तरा तस्या अप्यतिशयेन साक्षादवरो ब्रह्मा। तस्मात्सतमः। तया
चावरतरा रमा। अवरतमो ब्रह्मा। साक्षादित्युत्तरत्रापि संब
ध्यते। तयाचरमया अवरतरो ब्रह्मा। अवरतमा वाणी। अ
वरतमः शिवः। एवमारोहणावरोहणक्रमेणोत्कर्षापक
र्षाभ्यां तारतम्यं ज्ञेयं। सुरदैत्यनरेषुच। सुरशब्दो दृष्टां
तार्थः। सुरेष्विव दैत्यनरेष्वपीत्यर्थः। तस्यापि पृथक्
श्रेयः साधनत्वादिति भावः। यद्वा घटकसुरतारतम्य
प्रसंगादुक्तमितिना संगतिः। तदुक्तं तारतम्यं ततो ज्ञेयं
सर्वोच्चत्वं हरेस्तथा एतद्विना नकस्यापि विमुक्तिः स्या
त्कथं चनेति।

आलिंगेति भक्त्यैव उवाच ऋषिपुंगवं॥ किमर्थं त्वंऋषि
श्रेष्ठ मच्छरीरं कठीणकं॥ अमृतंचजरायुक्त मच्छेद्यं
देवमानुषैः॥ वज्रादृष्टगुणं विद्धि मच्छरीरं द्विजोत्तम॥
किमर्थं ताडितं विप्र कोमलांघ्रि तळेनते॥ पादौ ते कोम
लौ दिव्यौ मच्छरीरसमागमात्॥ कियद्दुखं समापन्नौ न
जानामि द्विजोत्तम॥ इत्युक्त्वा द्विजपादौ तौ प्रक्षाल्यो
ष्णोदके नवे। दधार शिरसा तोयं विप्रपादोदकं शुभं।
सगृहः सकुटुंबश्च सर्वलोकं विडंबयन्॥ विबुधा दर्श
नेनैव पुनंतिच जगत्त्रयं॥ इत्युक्तो देवदेवेन ऋषिस्त्वा
गाद्दूरातळं॥ ऋषीणामग्रजातीनां सभायां सऋषिस्त
दा॥ बोधयामास तान्सर्वान् सत्सर्वोत्तमः स्वयम्॥

● ततः प्रकृते किमभूदित्यत आह। ततस्त्विति॥ ततः भृगु
पदृत्यनंतरं। भगवान् देवः। निजमंदिरे एकांते। यद्वाऽ
तिष्ठत् स्थितः। कुतइत्यतआह॥ ताडितोसि इति अत्र पाठ
द्वयं। ऋषीणामग्रजन्मने त्येकः। ऋषीणां मां सजन्मनेत्य
परः। जगन्नाथोपि यो तः प्रविश्येत्यादेर्जगन्नियंतापिअग्रा
जन्मना। अग्रवर्णजन्मना ऋषिणा ब्रह्मऋषिणेति यावत्।
भृगुणा ऋषज्ञान इति धातोः बुद्धिपूर्वं ताडितोसि आह

भा.पु करवीरपुरं प्रतीत्यनुषज्यते ॥ यस्मिन्काले यथादेशे यथा टी.मा.
चारं करोमि तत् यत इति लभ्यते सर्वमिति च ॥ यथाचारः २
प्रचरति तन्नातिचरेत् ॥ अन्यथा चरंदुष्यतीति वाक्य
शेषः ॥ तथा शब्दः समुच्चये ॥ देशइत्युपलक्षणं कुला
देरपि ॥ जनपदधर्मोग्रामधर्मोश्च तान्विवाहे प्रतीयात् ॥
येनास्य पितरो याता येन याताः पितामहाः ॥ तेन याया
त्सतां मार्गं तेन गच्छन्नदुष्यति ॥ इति वचनात् ॥ तथा
चेत्थं योजना ॥ यथः यस्मिन्काले यस्मिन्देशे च यथाचारः
प्रचरति तन्नातिचरेत् ॥ अन्यथाचरन् दुष्यति ॥ तत् तस्मात् ॥
यथाचारं कालदेशकुलाद्याचारमनतिक्रम्य सर्वं करोमीति ॥
अतएव उत्तरत्र गीर्वाणाः संगिरंति ॥ यथायुगं यथादेशं यथा
कालं यथावयः । तथावतारमाकांक्षन् रमते रमयासह ॥
श्लो. एवं वदंतस्सुरपुंगवास्ते इत्यादि ॥ भगवत्पादाश्च प्रजायते
हि यत्कुले यथा युगं यथा वयः ॥ तथाप्रवर्तनं भवेद्दिवौ
कसां समुद्भवे ॥ इति स्वधर्ममुत्तमं दिवौकसां प्रदर्शयन्
इति ॥ इति संकल्प्य इति ॥ अनेन प्रकारेण संकल्प्य मा
नसं कर्म कृत्वा लीलामानुषविग्रहः लीलायै स्वावता
राय परिगृहीत वासुदेवादि मानुषविग्रहः ॥ मायावी प
रेषां दैत्यानां व्यामोहनकरी माया सास्यास्तीति मायावी ॥
अस्मायेत्या दिनाविनिः ॥ परमानंदः पूर्णानंदानुभवात्मकः ॥
उत्तमं वैकुंठं त्यक्त्वा अस्य श्लोकस्य एवं गिरिवरं प्राप्य
भगवान्वेंकटाचले वैकुंठादधिकं मत्वा विचचार इतस्तत
इत्युत्तराध्याये विद्यमानेनान्वयः ।

करवीरपुरं दिव्यं गच्छामि गरुडध्वज ॥ इतिसा प्रेम
कलहं कृत्वातु हरिणा सह ॥ रमाजगाम तत्क्षेत्रं कर
वीरपुरं प्रति ॥ यदागता महालक्ष्मीस्तदा नारायणो
हरिः ॥ अष्टाविंशतिमे प्राप्ते द्वापरांते कलौ युगे ॥
यस्मिन्काले यथादेशे यथाचारं करोमि तत् ॥ इति
संकल्प्य गोविंदो लीलामानुषविग्रहः ॥ मायावी
परमानंदः त्यक्त्वा वैकुंठमुत्तमम् ॥

भ·पु· अतः तदंतमेकं वाक्यं अनेन यदा सुवृष्टिः तदाजातः॥ वें·का॥
सुभिक्षो देश इतिवद्भमाया वसुंधरागमनं कारणं रमेशाग २
मनस्येति प्राप्त्याकारणपृच्छया यस्मिन्काले तथा देश इत्यादिना
कथं तापृच्छाया श्च समाधिरूक्ता भवति॥ गिरिमहन्ताप्रश्नोत्त
रार्थः॥ एवं गिरिवरं प्राप्येत्ये तद्वाक्यघटकोक्त परामर्श एवं कारेण
परामष्टमाह॥ गंगाया दक्षिण इत्यादिना॥ शत त्रयो जाते तदुपरि
इत्यर्थः॥ नदीनां प्रवरा जह्नवीव। शुकेनमे महागुरुसमागम
द्वारा सदृशनोपदेशाद्योग्य श्रीनिवासा परोक्षः स्यादिति मनसि
कृत्वा सर्व नदीमातृक पद्म सरसि लक्ष्मी सन्निधौ तपश्चरण
न्तत पः प्रसन्नं श्रीनिवासेनोक्त वरलाभान्तद्वरदेत्यर्थः॥ तदुक्तं
ब्राह्मे तृतीयोध्याये॥ शंखराजं प्रति श्रीनिवासः॥ त्वंचापिगच्छ
शैलेंद्रं पूर्वं स्वर्नमुखीतटे॥ यत्र ब्रह्मशिलानाम सरिन्मध्ये च
वर्तते॥ अगस्त्य तपसा पश्चाद्ययासन्निध्यमत्रवै॥ पादा
दीशान विष्णादि देवानां तत्र संतिहि॥ यतिरूपो मातरिश्वा
ह्यष्टाविंशति मेकलौ॥ यज्जत्रायं वदंत्यद्धा मध्वनाम्नापरं विभुं।
तवैव तपसा पुण्ये प्रीत्या चागस्त्य योगिनः॥ तत्स्थापितालये
पुण्ये चातुर्मास्यं करिष्यति॥ शुकः श्रोष्यति तच्छास्त्रं पद्म
तीर्थादिकैर्युतः॥ पश्चादृपगिरेः शृंगे दक्षिणे चक्रसंज्ञके॥
तत्र कालांतरेगस्त्यः सशिष्यो ह्यागमिष्यति॥ मुनिनोक्तं
च माहात्म्यं शृण्वन्कुरुप्रदक्षिणं॥ साकंतेन समाधिस्थः सा
क्षात्पश्यतितं विभुं॥ त्वयापि संस्तुतो देवः तवाभीष्टं ददा
तिच (हि) इत्यादि प्रयच्छति॥ एतेन बहुभक्तसमागमे
सत्येव श्रीनिवासस्य तंत्रेण बहूनां योग्यापरोक्षदाने
भिरुचि विशेष इतिज्ञायते॥ अतएव महोत्सवे बहूनां
यात्रेति प्रासिद्धिः॥ पद्मतीर्थादिहागत इति पाठे॥
सत्यादागत्य च्छाया शुकेनैक्यमापाद्य पद्म तीर्थादिगा
हत इत्यर्थः। द्वितीयेऽर्थे स्पष्टोर्थः। मुनिना च मध्व
मुनिना शुकमुनिना अगस्त्य मुनिना च उक्तं। शास्त्रेण
भागवतेन पुराणेन चोक्तं माहात्म्यं। परतत्व माहात्म्यं
कृष्ण माहात्म्यं तीर्थमाहात्म्यंच त्वयापि नकेवलं तैः

४१८-४३

विस्तारवान्। समसूत्रं त्रिंशद्योजनायामवान्। वदनमिति स
र्पगिरेरिति शेषः। वदनं वदनांशः वेंकटगिरिः तन्नामकः मध्य
मांशः नारसिंहाचलनामकः पुच्छांशः श्रीशैलः क्षेत्रमयः
प्राचुर्येण प्रस्तुतानि क्षेत्राण्यस्येति क्षेत्रमयः तत्प्रकृतव
चने मयडिति प्राचुर्ये मयट्। सर्ववृक्षसमाकीर्णः। अश्वत्थो
दुंबरकोविदारादि सर्ववृक्षैर्निबिडः॥ सर्वधातुविभूषितः
सुवर्णरूप्यताम्राणि हरितालं मनश्शिला गैरिकांजन
कासीस लोहसीसाः सहिंगुळाः। विमलं कार्परं ताप्यं त्रपुका
स्यं तयैव च गंधकोभ्रकमित्याद्या धातवो गिरिसंभवा इत्यु
क्त धातुभिर्विभूषितः। तदुक्तं वराहे अष्टमे॥ अष्टौ तां खन
यस्संति लोहानां कनकाचले॥ युगभेदेन दृश्यंते नराणां
पुण्यकर्मणां॥ सुवर्णं रजतं ताम्रं रीतिः कांस्यं तथा त्रपु
सी संच तगरं चैव अष्टौ लोहानि चक्षते॥ इति॥ सरळविरळ
तया कलिवृक्षघनतयापि सर्ववृक्षसमाकीर्णत्वं साधारणमतः॥
पुण्यकाननत्वप्रयोजक देववृक्षादीनाह॥ कुंदमंदारेत्यादिना॥
कुंदेमुकुंदः। मंदारे लक्ष्मीः। पनसे विश्वेदेवाः॥ प्लक्षोऽश्वत्थः॥
तस्मिन् विष्टरश्रवाः केशवः॥ औदुंबरे अग्निः। किंशुके भगः
ब्रह्मा च। मुकुंदे मुकुंदः। पारिभद्रेऽहिर्बुध्न्यः॥ तिंत्रिण्यां वरु
णः। जंबौ ब्रह्मा॥ ताकेहिं ताकेच श्री सरस्वती च॥ लक्ष्मीस्सर
स्वती सन्निधानस्य स्वतपः संतुष्ट ब्रह्म वरलब्धत्वात्॥ पुन्ना
गे शेषः॥ देवदारौ सर्वे देवाः॥ कुं भूमिं द्यतीति कुंदः दोऽवखं
डने पृषोदरादिः॥ कुंदश्चक्र भ्रमे माध्ये निधौ कुंदे मुरद्विषि
इत्यमरः॥ कुंदुरुष्केति प्राकृतभाषया गंदिकापणप्रासिद्धः॥
मंद्यते स्तूयते मंदारः पारिजातकः। मंदारः पारिजातकः
इत्यमरः॥ प्राकृते हालिवाण। पण्यते स्तूयते पणसः
पणस्तुतौ पणिपनिभ्योऽसच्॥ पनसः कंटकिफलः
पणश्च बृहत्फलः इत्यमरः॥ प्रक्षरतीति प्लक्षः। अन्येष्व
पी[illegible] तिडः। श्री वृक्षः पिप्पलोश्वत्थः प्लक्षश्च लदळों
गुळः इति वैजयंती॥ श्री वृक्षः केशवावासो मांगल्यो व
ह्नि गर्भकः। इत्यमरः॥ औदुंबरः उदुंबर एव औदुंबरः॥

भ·पु स्वा र्थेऽण्‌ उदंबरो जंतुफलो यज्ञां गोहे मदुग्धकः । इत्यमरः ॥ पलाशे वें·भा·
किं शुकः पर्णो वात पोथी जुहू तरुः । क्षारद्रु ब्रह्म वृक्षश्च त्रिपलाशः २
समिद्वर इत्यमरः ॥ प्राकृते मुन्तक ॥ मुकुंदः कुंद कुंदरू इत्यमरः ॥
प्राकृते मल्लेमर ॥ पारिभद्रे निंबतरुः इत्यमरः ॥ बेवु ॥ प्लक्ष
श्च तिंत्रिणी चिंचाऽम्लिका चुक्राच तिंत्रिडा इत्यमरः ॥ हुण
सी ॥ जंबू स्त्रिसारा विरजा महा त्वां महाफलेत्यमरः ॥ नीरलु गिड
न त्वं दृदं भूजंबूक फेलू कर्क ध्रू इत्यूदंत निपातनात्कथमुदंततेति
चेन्न । परिणत जंबुफलोप भोग हृष्टेति प्रयोगादिको हस्वो ङ्यो गाल
वस्येति उत्तरपदे हस्वः । हस्वान्तं । जंबुरत्यपि प्रकृत्यंतरमस्तीति
जंबु मंडलै रिति साधुः । जम्यते जंबुः । जमु अदने । तळते ताळः ॥ त
ळ प्रतिष्ठायां घञ्‌ । तृणराजाह्वयस्ताळो दीर्घस्कंदो (धो) द्रुमेश्व
रः ॥ हिंतो ति वर्धते तळति प्रतिष्ठते चेति हिंताळः ॥ हिवृद्धौ ॥
तळप्रतिष्ठायां नुमागमः पृषोदरादिः हिंताळस्तृणराजश्चलं
तां कुरक इत्यपी त्यमरः ॥ पूजितः पुमान्पुन्नागः । पुन्नागे पुरुष
स्तुंग केसरो देव वल्लभः इत्यमरः ॥ सुरगीमरः ॥ देवदारु द्रु किलि
मं पीतदारूच दारूचे त्यमरः ॥ वटोदुंबराश्वत्थ प्लक्षागंधर्वा
प्सरसां गृहा इति श्रुतिप्रसिद्धिः ॥ हंसकारंड वाकीर्ण इति ॥ हंसः
कलहंसः कलहंसः कादंप क्षी हेसरु कादंबः कलहंसः स्यादित्य
मरः कारंडवः नीरकोळी ॥ कारंडवो महा पक्षः प्लवस्याद्वारि कु
क्कुटः इत्यमरः ॥ तैराकीर्णः । बकः बेल्लकी बकः कद्ध इत्यमरः ॥
कोकः चक्रवाकपक्षी कोकश्चक्रश्चकः गिणि अथकीर शुको इत्यमरः ॥
कपतोतः पारावतः पालिवाणः पारावतः कलरवः पाटलांघ्रिश्च
रक्तदृक्‌ । मदो त्कटो बाल वत्सः कपोतोथ शशादन इत्यमरः ॥ क्षी
रहंसः राजहंसः । हंसास्तु श्वेतगरुतश्चक्रांगा मानसौकसः रा
जहंसास्तुत इत्यमरः ॥ सिंहेति ॥ हिनस्ति इति सिंहः ॥ हिंसि हिं
सायां । पृषोदरादिः । सिंहो मृगेंद्र पंचास्य इत्यमरः ॥ शृणाति
शार्दूलः । शु हिंसायां रवर्जादिभ्यश्चेति ऊलच्‌ कमेर्दुक्के त्यनुवर्त
माने शृणोते दीर्घश्चेति दुग्दी र्घौ शार्दूल द्वीपिनो व्याघ्र इत्यमरः ॥
गहानादस्तु शार्दूलो हरितोऽतुल्य विक्रम इत्यमर शेषः ॥ शृणाति
शरभः । शॄ हिंसायां कृशृशली त्यादिनाऽभच्‌ । शरभस्तूर्ध्व लोचनः ।

गजारिरष्टपादः स्यात् शेषः । अष्टपादो र्ध्वनयनः शरभो वन
गोचर इति भारते ॥ क्रोशतीति क्रोडः घञ् पृशोदरादिः ॥ क्रो
डो भूदार इत्यपीत्यमरः ॥ क्रोडतीति वा क्रुड घनत्वे । मतंगा
स्यायं मातंगः ॥ तस्येदमिति संबंध सामान्ये ऽण् ॥

> कुंदमंदार पनसप्लक्षोदुंबर किंशुकैः ॥ मुकुंदैः पारिभद्रैश्च
> तिंत्रिणी जंबुमंडलैः ॥ ताळहिंताळ पुन्नाग देवदारुविराजित ॥
> हंसकारंडवाकोर्णा बककोक शुकैर्वृतः ॥ कपोतैः क्षीरहंसाद्यैः
> मृगैश्चान्यै विभूषितः ॥ सिंह शार्दूल शरभक्रोडमातंगवानरैः ॥
> जंबुकैश्चैव भल्लूकैः कस्तूरीमृगवासितः ॥ मल्लिका मालती
> जाती नंद्यावर्त विभूषितः ॥

मतंगजो नागः कुंजरो वारणः करीत्यमरः ॥ नर इव वानरः ॥ वा शब्द इवा
र्थे मयूरव्यंसकादित्वात्समासः ॥ मर्कटो वानरः कीश इत्यमरः ॥ तेपि
नराइव नरेषु प्रचरंतीति वानरपदप्रयोगः ॥ मांसं जमतीति जंबुकः ॥
सृगालो वंचकः क्रोष्टृ फरुफेरव जंबुका इत्यमरः ॥ भल्लतीति भल्लू
कः । भल्ल परिभाषण हिंसा दानेषु उलूकादयश्चेत्यूकञ् । अनुप
धत्वा द्वृद्ध्य भावः ॥ ऋक्षाक्ष भल्ल भल्लूका इत्यमरः ॥ करडी ॥ अच्छ
भल्लेति संघात विगृहीतं । कस्तूरी मृग वासितः ॥ तैर्वासितः नि
वासितः । तत्संबंधि मृगमदवासितो भावित इति ॥ मल्ल्यते धा
र्यते इति मल्लिका । मल मल्ल धारणे ण्वल् । तृणशुल्यं तु मल्लिका
भूपदी शीत भीरुश्चेत्यमरः ॥ शेषे मदयंतीति प्रमोदिनी अष्टापदी
विचकिलइत्यादि ॥ मल्यते धार्यत इति मालती मलतेरति प्रत्ययः
पृषदरादिः । सुमना मालती जाती सप्तला नवमल्लिका वनमाली
च नेपाळी वनो मासे रवरिण्यपीत्यमरः ॥ सप्त घ्राणादि पंच
मनो बुद्धि चालयतीति सप्तला नेपा ळजा जी हूवु ॥ जायत इति
जातिः औणादिकः क्तिः । वाडीषि जाती दक्षिण जाजी पुष्प ॥
नंद्यावर्तविभूषितः । नंद्यावर्तेतु तगरस्तारा वदन भागणे इति
वैजयंती ॥ भंडीलोप्यथ चांपेय श्चंपको हेम पुष्पक इत्यमरः ॥
संपिगी गिड ॥ वंजुळोंशोकेरागिकंकेळि रक्तकः विशोकः क
र्णपूरश्चेत्यमरः ॥ अशोकदमर ॥ पुन्नाग उक्तः ॥ केतकैः हरिम
केतकी नक्लीदितो व्यंजनजंबुको ॥ स्त्री भूषणां रजः पुष्पोगुप्त

भ॰पु रागे वल्ली नक इत्यमरः ॥ नक्ली त्युक्ते: ॥ रामायणे ऽरण्ये ॥ श्चूतैरशोकैः वें॰मा॰
चंपकैः केतकै रपीति सकेतकोद्दालक नारिकेल इति महाकवि प्रयो २
गाच्च । केतकै रिति साधुः ॥ द्वंद्वाते श्रूयमाणः प्रत्येकं संबध्यत
इति न्यायेन पंचक केतकै र शोक केतकै रिति वार्थः ॥ अतएव तत्र
नागा वसंति ॥ स्वर्नकेतकैः तसा पीता मदन द्रोणी सुगंधीकनक
च्छदा परुषो चापि इत्यमरः ॥ स्वर्नकेतकी मनोहरः । मनोरमः
श्रीमान् संपद्युक्तः ॥ अतएव पुण्य कानन: ॥ तरव इति ॥ देवता
गणाः । देवानां प्रतिमा स्थानीयास्तरव इत्यादि योज्यं ॥ एव
मिति ॥ अहि गिरींद्र जन्मनः । शेष गिरींद्र मूर्तेः ॥ तथा वेंकटा
द्रेः ॥ वेंकटाद्रि नामकस्य हरे । श्रीनिवासस्य च । एवं उक्त प्रका
रेण प्रभावो हि प्रसिद्धो स्ति ॥ यद्येवं कुतः ॥ सर्वे न जानंतीत्य
त आह ॥ जानंतीति तं । इति शेषः ॥ तमेवं प्रभावं ब्रह्मेश सुरे
ष पूर्वकाः जानंति ॥ निजानुभावाद्धरे रनुग्रहान्महाप्रयत्ना
न्मन्वते ॥ तत्र एवं प्रभावे विषये मनुजाः किं कः पदार्थ इत्या
क्षेपे किं शब्दः ॥ किं राजा यो न रक्षतीतिवत् ॥ ये दीनाः ॥ निजा
योग्यतादि एतत्प्रभाव ज्ञान सामग्री दरिद्राः ॥ दीनो दरिद्रो
दुर्गतोपि स इत्यमरः ॥ तर्हि कथमपि किमपि किं न जानंत्येवे
त्यत आह ॥ कथंचनेति ॥ अति प्रयत्नात्किंचिज्जानंतीत्यर्थः ॥
इयता प्रबंधेन किं तस्य चरितं माहात्म्यं पर्वतस्य चेति एत
द्द्वृत्तोत्तरं ॥ छ ॥ श्री इति श्रीमद्भविष्योत्तर पुराण व्याख्याने क
ल्याण कांड दीपे जीवितांश श्रीनिवास हृद्यंगवीनलाभो नाम द्वितीये
ध्यायः संपूर्णः ॥ श्री श्रीनिवासाय मंगळं ॥

---

चंपकाशोक पुन्नाग केतकैः स्वर्नकेतकैः ॥ एवं मनोहरः श्रीमान्
पर्वतः पुण्यकाननः ॥ तरवो देवतगणाः मृगाख्या मुनिपुंगवाः ॥
पितरः पक्षिणः सर्वे पाषाणा यक्ष किन्नराः ॥ एवं प्रभावो हि गिरीं
द्र जन्मनः श्रीवेंकटाद्रेस्तु हरेः तथैव ॥ जानंति ब्रह्मेश सुरेश
पूर्वकाः किं तत्र दीना मनुजाः कथंचन ॥

---

॥ इति श्री भविष्योत्तर पुराणे वेंकटगिरि माहात्म्ये गिरिवर्णनाम

द्वितीयोध्यायः

३.५ श्री भास्यायनमः ॥ विश्वायनमः ॥ हरिः ॐ ॥ जनयति विं | वें.भा
धिसमाख्यो राजसे नात्मनासौ अवति हरि समाख्यः सखनिं | २
ष्टः प्रपंचं ॥ हरति हरसमाख्य स्तामसी मे त्य वृत्तिं मधुमथन
महिम्ना भस्तिवे त्तानकोपि ॥ ३॥ तीर्थानां माहात्म्यमाचक्ष्वेत्य
स्यो त्तरमाह ॥तस्येत्यादिना ॥ तस्या हीन्द्रगिरेः उपरि ऊर्ध्वभागे
मूर्ध्नि देशेवरा॥ सर्वतीर्थोत्तमा ॥ वराहे प्रथमे ध्याये ॥ एतेषां प्रवरा
देवि स्वामि पुष्करणी त्येवं नामधेयं च त त्कृतं ॥मार्कांडेयसमस्था
नां तीर्थानां स्वामिनी यत इति ॥ स्वामिनी च सा पुष्करिणी चेति
कर्मधारयः ॥ वराहे प्रथमे ध्याये ॥ त्रैलोक्ये यानि तीर्थानि सरां
सि सरितस्तथा ॥ तेषां स्वामित्वमापन्नं धरे स्वामि सरो वरमि
ति च ॥ स्वरूपं नाम चोक्त्वा लक्षणा न्याह ॥ मत्स्येत्यादिना ॥
मीन कूर्म संपूर्णा गहना जलकुक्कुटाः कारंडवाः तैर्मुखाभरण
स्थानीयैर्भूषिता ॥ ३॥ शिंशुमारगणाकीर्णा ॥ शिशून्मारय
तीति शिंशुमारः स इवा चरति इति तथा सहस्र दंष्ट्रः पाठीन
नामकः करिमीनु ॥ यद्वा शिंशुमारः मोसळी । तद्भेदा शिंशुमा
रोद्राः शंकरो मकरादयः इत्यमरः ॥ तद्गणसंकुलेत्यर्थः ॥
मंडूकस्वन हुंकृताः ॥ मंडूकस्वनात्मक हुंकार युक्ता ॥ हुं
श्रीनिवास भक्तोयं इति । परिपृच्छंती हुं नाशयामि सहसा स्ना
ने पापानि इति क्रुध्यंती । हुं मत्तीरादपसर हराव भक्ता इति भर्त्स
यंती श्रीनिवाससान्नि ध्यात्पाप पराभव शक्तिमती इत्यायेव हुं
कारयुक्ता ॥ हुं वितर्के परिप्रश्ने स्मृत्या मंत्रण भर्त्सने अंगीकारे
च कथितं इत्यमरः ॥ वितर्केच परिप्रश्ने क्रोध भर्त्सनयोरपि ॥ अ
निच्छा भययोः स्मृत्यां हु मित्य व्ययमुच्यते इति नानार्थे गतो
हुं च पराभिवात्मकः इति ब्रह्मा रोषे त्येत तीरजे वृक्षसंघैश्च
चुंबिताच वरानना ॥ वरानतेति ह्रस्वांत पाठे जकस्य शोन
कस्य वा संबोधनं । भूषितेत्य ध्याहारः॥चु बि वक्त्र संयोगे ॥

॥ हरिः ॐ ॥ तस्योपरि वरा दिव्या स्वामिपुष्करणी शुभा ॥
मत्स्यकच्छप संबाधा जलकुक्कुट भूषिता ॥ ३॥ शिंशुमारगणा
कीर्णा मंडूकस्वन हुंकृता ॥ तीरजै वृक्षसंघैश्च चुंबिताच वरानना
॥ २॥

भ०मु नकेवलं पर्वतैः भूषिता ॥ अपितु वृक्षसंघैश्च नकेवलं वृक्षसंघैः वें०मा
भूषिता अपि त्वर्गैस्याली ये स्तीरजैः वृक्षसंघैश्चुंबिताच ॥ स्वा ३
ग्रात्मक। ननसंयोजिता ननाचोत्यत्क्रमः ॥ यद्वा च शब्द इवार्थे। व
राननेव जगन्मोहनसौंदर्य बन्मंदस्मितकल्येव चुंबिताच ॥ २॥
लक्षणमुक्त्वा माहात्म्यमाह ॥ गंगादीति ॥ जन्मभूमिविराजिता ॥
जन्मभूम्या विराजितेति तथा ॥ तथाच ब्रा
ह्मे तृतीयोध्याये ॥ देवस्य पापिका काचिन्नाम्ना बकुळमालिका ॥
प्रसाद्य देवं पाकेस्मिन् श्रिया संयोजिता विभुं ॥ तीर्थभूम्याधिपत्यं
च लेभे वरमनुत्तमं ॥ तत्रैव वासं देवस्य ययाचे सा पुनर्हरिं ॥ इत्यादेः ॥
स्वामिपुष्करिण्याः परितो भूम्यास्तीर्थभूमित्वं ॥ पाठांतरं जन्म
भूमिविराजिता इति ॥ गंगादिसर्वतीर्थानां जन्मभूमिः शुभोदके
ति पुराणांतरात्साधुः ॥ पुण्यानिवर्धयंतीति पुण्यवर्धनाः। तेषादि
त्या ऋयुः ॥ किमत्र मनुजानां च स्नानकालो व धारितः ॥ अयं काल
इति ॥ एतेनेतिच शेषः ॥ एतेन देवानामपि वांछितत्वेन मनुजानां च
मानुषाणामपि अयं कालः ॥ धनुरशुक्ल द्वादश्यरुणोदयकालः ॥
अत्र पुष्करिण्यां स्नानकाल इति अवधारितः ॥ अयमेवास्यां स्नाने
फलातिशयहेतुः नान्य इति निर्धारितः ॥ अत्र स्नानप्रवृत्तावंग
भूतं फलातिशयादिकं किं वक्तव्यमस्तीति शेषः ॥ अथवा बहुनो
क्तेनेति शेषः ॥ अत्र पुष्करिण्यां स्नाने कर्तव्ये किं बहुलोके न
मनुजानामपि अयमेव स्नानकालो वधारितः इत्यर्थः ॥ ५॥
पुराणर्षिः स्नानाधिकारिणः संबोध्य श्लोकमेकं गायति ॥
जन्मना किमनेनैव देवेन भवतामहो ॥ स्नानदानेन तत्तीर्थे मनु
जा भाग्यशालिन इति ॥ अहो स्नानाद्यधिकारिणः ॥ दैवेन
पूर्वपुण्येनागतेन ॥ अनेन मानुषेण जन्मनैव जन्ममात्रेण
जन्मागमनतत्क्षण इति यावत् ॥ किं किं भाग्यं प्राप्तं। किंकृ
त्यं कृतमासीत् ॥ किंतु तत्रापि दैवेन ॥ तत्राप्यतिशयितपुण्ये
न तत्तीर्थे कृतेन स्नानदानेन मनुजाः भाग्यशालिनः ॥ कृत
कृत्याश्चेत्यर्थः ॥ शंखो नाम नृपः कश्चित्स्नानमात्रेण मुक्ति
गः ॥ नाकगः ॥ अयमंशो वामनपुराणे ॥ एकादशाध्यायादा
सप्तदशाध्यायं विस्तरेण व्याख्यातः ॥

भ-पु

गंगादि सर्व तीर्थानां जन्म भूमि विराजिता ॥ तस्यां ये
स्नाति मनुजाः ते धन्याः पुण्य वर्धनाः ॥ ३ ॥ धनुर्मासे
सि (शि) ते पक्षे द्वादस्यामरुणोदये ॥ कांक्षंति त्रिदशा
तत्र मज्जनं तज्जले शुभे ॥ ४ ॥ किमत्र मनुजानांच स्ना
नकालेव धारितः ॥ तत्र श्राद्धादि कर्माणि पितृणां प्री
तये द्विजाः ॥ ५ ॥ जन्मना किमनेनेव देवेन भवताम
हो ॥ स्नान दानेन तत्तीर्थे मनुजां भाग्य शालिनः ॥ ६ ॥
शंखो नाम नृपकश्चित् स्नान मात्रेण मुक्तिगः ॥

वें.गा। २

तदीष सवर्तती दर्शते ॥ शंखो नाम महाराज हैहयानां कुलोद्भ
वः ॥ हैहयो यदुकुलोद्भवः ॥ अतः सोमवंशजः ॥ सोम वद्भगव
द्भक्तं प्रह्लादेन समो भुवि ॥ सोयजत्सर्व भूतेशं अश्वमेधादि
भिर्मखैः ॥ नारायणं जगन्नाथं प्रणतार्ति हरं हरिं ॥ भक्तिभा
वेन महता विष्णुः सर्वमखैरपि ॥ सोऽभव दुःख संतप्तो य
तोऽपश्यन् जनार्दनं तं अत र्हितो भगवानुवाच ॥ नाराय
णगिरौ स्वामि पुष्करिण्यां स्नात्वा तपश्चर ॥ त्वयि तत्र तप
स्यति वत्सराणां सहस्रेऽतीते ब्रह्मादिष्टोऽगस्त्यो मुनी
द्रैः सहमां द्रष्टुमागमिष्यति ॥ ततो बहुतिथे काले साधने
पक्वे सति मां द्रक्ष्यसी त्यादिष्टे शंखे राजनि तपस्यति ॥ अग
स्त्योप्युक्तकालः आगतः ॥ पुष्करिण्यां स्नात्वा बहुकालं
तपश्चचार ॥ अथापि सोपि तमपश्यन् दुष्पः ॥ पुनर्ब्रह्म
वाक्यात्सुस्थः ॥ तदा शुक्र बृहस्पति वसुराजाश्चागताः ॥
तेपेत्येपि मिळित्वा पुष्करिण्यां स्नात्वा द्रष्टुकामा अ
तिशये आनर्चुः ॥ तदा चतुर्थे ह्नि सुमुहूर्ते भगवाना
विर्बभूव । तं दृष्ट्वा सर्वे मुक्तिमर्थयामासुः ॥ तेषां उ
चितकाल भाविनीं । य एनां सेवते नित्यं स्वामिपुष्करिणीं शु
भां ॥ सोपि मुक्तिमवाप्नोति भुक्तिं चापि न संशय इत्युक्त्वा
मुक्तिं ददाविति ॥ तथाच शंखो नाम शंख इति प्रसिद्धः क
श्चिन्नृपः स्नान मात्रेण धनुश्शुक्ल द्वादश्यरुणोदय का
लानुकूल्या भावेपि नित्यस्नानेन नाकगः ॥ मुक्तः ॥ फलाति

भ-पु। शय हेतुकाल विशेष कृतेन स्नानेन मुक्तो भवतीति किमु वं वें-मा
क्तव्यं। इत्यर्थः ॥ स्नातमात्रेणात्यस्यार्थो नित्यमिति ॥ अस्य पुरा ॥ २
णस्य आद्यचतुर्लक्षणी वेंकटाद्रेः तद्गीशस्य असाधारणा लौकिक
देवगम्य चारित्र्यानुवादिनी सूत्रकल्पा ॥ अतः प्रकृतेतर पुराणा
नि विस्तरेणैतद्व्याख्यानरूपाणि। अतः तदनुसारेणास्यार्थश्च तु
र्लक्षण्या अर्थो बोध्यः ॥ उत्तरा सप्तलक्षणी विस्तरेण लौकिक
चतुरचारित्र्यानुवादिनी ॥ अस्याः सप्तलक्षण्याः संग्रहेन व्या
ख्यानं वराहपुराणं ॥ अतः तदनुसारेणास्यार्थो ज्ञातव्यः ॥ अत्रेदं
बोध्यं ॥ सोमसूर्यजाविति द्वौ शंखराजौ ॥ अत्राद्यो रैवताख्य पंच
मन्वंतरकालिकः ॥ सच ॥ वेदाः स्वधीता मम लोकनाथे तप्तं त
पो नानृतमुक्तपूर्वं ॥ पूजां गुरूणां सततं करोमि परस्य गुह्यं न च
भिन्नपूर्वं ॥ गुप्तानि चत्वारि यथागमंमे शत्रौ च मित्रे च समोस्मि
नित्यं तं चापि देवं शरणं प्रपन्न एकांतभावेन भजाम्यजस्रं ॥
एतैर्विशेषैः परिशुद्धसत्वः कस्मान्न पश्येयमनंतमेनं तमेन
मिति नवमांत गीताभाष्योदाहृत मोक्षधर्म वचनोक्तः
गुणामु क्तः ॥ अयंच धर्मेण राज्यपालनं कृत्वा पुत्रं राज्येभि
षिसिच्य नारायणगिरौ बहुतपस्तप्त्वा हरिं दृष्ट्वा
मुक्तः ॥ ७ ॥ द्वितीयस्तु षष्ठ चाक्षुष मन्वंतर कालिकः ॥
तस्मिन्नेव मन्वंतरेऽष्टाविंशति मे कलौ यवच्चंद्रार्क मेदिनो
ता। वत्तिष्ठतु मे सेवेति श्रीनिवासं प्रति तपस्यतो दुर्यनुग्र
हाज्जगद्गुरोः मध्व नाम्नः सकाशा च्छुकमुखस्य तत्वो
पदेशः ॥ ततः स्वयोग्या प्राकृत विमानाधिष्ठित श्रीनिवास
दर्शनं ततः तदाज्ञप्त करिष्यमाण विमानस्य यावच्चंद्रा
र्क मेदिनी स्थिति समस्थेम्ने बहुकालं तपः तप्त्वा तस्मिन्ने
व मन्वंतरे अनंतर भावि एकोनविंशतितम कृतयुग पश्चाद्भा
गे यया दृष्टं विमानादि सेवां कृत्वा कृतकृत्योऽभूत् ॥ अत्रापु
रो विशेषः ॥ विमानसेवा कर्तारः त्रयः ॥ तत्राद्य उक्तः ॥ सूर्य
वंशराजः शंखः ॥ द्वापरो तौ डिमानौ ॥ अत्राद्यो वैवस्वतम
नुकालिकः। तस्मिन्नेव मन्वंतरे पंचविंशति तमे कलौ गोपी
नाथेन ब्राह्मणेन सह रंगदासाख्यः शूद्रः श्रीनिवासाराधन

शंखस्य

८

३५ पर आसीत् ॥ सदैवापराधादेहं परित्यज्य नारायणपुरे तों वें मा
डिमानिति विश्रुतो द्राविडेश्वर चक्रवर्ती भूत्वा सप्तविंशति २
तमे कलौ मनुकल्प प्रजया च्चिर विनष्टं पुरा शंखकृतं वि
मानमुद्धार ॥ अयंच तोंडिमानः पद्मावती पितृव्यभिन्नः ॥
अष्टाविंशे कलौतु ॥ पद्मापितृव्यस्तोंडिमानः पुनरुद्धार
तदिदानीमपि दृश्यत इति अयमर्थो ब्रह्म पुराणे भासते ॥
पुरानारायण इति ॥ अयंच श्लोको विस्तरेण ब्रह्मांडे पुरा
५४ णे व्याख्यातः ॥ तन्मनाक्प्रदर्श्यते ॥ ब्रह्म णाति समादि
ष्टो नारायणादिदृक्षया ॥ नारायणाख्य विप्रोस्ति तदागिरिवरे
शुभे ॥ स्वामिपुष्करणी तीरे सुरसिद्धनिषेविते ॥ विशुद्धात्मनि
विप्रेंद्रे तपस्यति चिरंतदा ॥ अथास्मिन्नंतरे तस्य तपसा प
रितोषितः ॥ वासुदेवः प्रादुरभूद्वरदासर्व देहिनां ॥ अद्य प्रभृ
ति चायं वै गिरिः त्वन्नामतः सदा ॥ नारायणाचल इति प्रसि
द्धो भवतु द्विज ॥ इति तस्य वरं दत्वा स्वसायुज्यं ददौ हरिः ॥
अत्र स्नानमात्रेणेत्यनुवर्तते ॥ ६ ॥ रामोपेति ॥ स्वामिपुष्करिणी
तीर्थे स्नात्वा पश्चाद्रणे रिपुं ॥ रामोथ रावणं हत्वा जयमप्त इति
श्रुतमिति ॥ ८ ॥ एवं तीर्थवरेति ब्राह्मणो यदि वा वैश्यः क्षत्रियः
शूद्रजोपि वा ॥

पुरा नारायणो नाम ब्राह्मणोंगिरसस्सुतः ॥ ७ ॥ हरिं
दृष्ट्वा वरं लेभे जगाम हरिमंदिरं ॥ रामोपि राक्षसैनै
व नीतां शीतामवापसः ॥ ८ ॥ एवं तीर्थवरा तत्र स्वामि
पुष्करिणी शुभा ॥ तस्यास्तु वायुदिग्भागे वराहवद-
नो हरिः ॥ ९ ॥ धरामालिंग्य तत्रैव सुपिप्पल विरा
जितः ॥ त्रिकोट तीर्थ जातीनां जन्मस्थानं सुबुद्धयः ॥ १० ॥
एवं गिरिवरं प्राप्य भगवान्वेंकटाचलः ॥ वैकुं
ठादधिकं मत्वा विचचार इतस्ततः ॥ ११ ॥

स पापी यदि वा पापः स्वामि पुष्करिणी जले ॥ स्नात्वा चात्र वसं
तं मां ये नमस्यंति मानवाः ॥ ददाम्याकल्पमेवाहं तेषां वासं त्रिवि
ष्टपे ॥

स्वा

भ.पु यः करोत्याप्लवं स्वामि सरसीजलमध्यतः ॥ सोतीत्य निरयं सर्वं वें.मा
ब्रह्मभूयाय कल्पते ॥ इत्याद्येवं तीर्थवरा एवं तीर्थमाहात्म्यमु २
क्त्वा वराहमाहात्म्यं वदेत्यस्योत्तरमाह ॥ तस्यास्त्विति ॥ पिप्पल
विराजितः बोधिद्रुमश्चलदलः पिप्पलः कुंजराशन इत्यमरः ॥
पुनः पर्वतमाहात्म्यमुक्त्वोपसंहरति ॥ त्रिकोटिजातीनि तीर्थजा
तीनामिति ॥ पर्वतमेनं जन्मस्थानं सुबुद्धयः ज्ञानिनो वदंतीति
शेषः ॥ त्रिकोटीति मुख्यापेक्षया षट्षष्टिकोटितीर्थानि पुण्यान्य
त्र नगोत्तम इत्युक्तेः ॥ यद्वा जातीनामिति स्वप्रधानमेवास्तु न भवि
तृप्रधानः ॥ तथात्वेति सत्रश्चताः कोटयश्च त्रिकोटयः ताश्चताः ती
र्थजातयश्च तथा तथा चैकैककोटि तीर्थजातीनां व्यक्तयः द्वावि
शति द्वाविंशति कोटयः इति षट्षष्टिकोटयः तथा चैकवाक्यतेति ॥
एवं गिरिवरं प्राप्येत्ययं श्लोक उक्तान्वयः । विचचार इतस्तत इति ॥
-त इतीति शेषः ॥ प्रथममितिच ॥ इत अस्मस्थानात्स्थानं ततः
तस्मा स्थानादिदं स्थानं इत्येवं विचचार प्रथमं संचचारेत्यर्थः ॥
किं किमत्रास्तीति परमाश्चर्यादिति भावः ॥ ३३ ॥ न प्राप किंचि
दा स्थानं इति पदच्छेदः ॥ आङीषदर्थे कालक्षेपे आकांक्षायां च
अत्रामरोस्ति ॥ तत इत्यावर्तते ॥ यदित्यध्याहारः ॥ ततः प्रथम
तः संचारानंतरं । रमापतिः ॥ आ अवतारकृत्यं बह्वागामि कालांत
रभावि तावत्कालं अत्र यत्र कुत्र चिद्यथा कथं चिद्वा विष्कारेण
कालक्षेपं कर्तुं यद्गृहनं आ आकांक्षितं तद्गृहनार्थं संवरणाय
आ आकांक्षितं यत् आ ईषत् स्थानं तत् किंचित् किमपि
स द्योन प्राप ॥ तत इतस्ततो यद्भवेदिति विचचार विचारयामा
सेत्यर्थः ॥ यावद्वाक्यतात्पर्यार्थ पौष्कल्यं पदवर्तनस्य
न्याय्यत्वात् ॥ इत्थं विचार्य माणोतु स्वामिपुष्करिणी तटे
दक्षिणेतु वातातप हिम शीत वर्षादि पीडारहितत्वादि
विशेषेण विमलं ॥ निर्मातृ ब्रह्म वम्रिकीटसमूहेन निर्माय नि
सृष्टं दिव्यं द्युभ्यो द्युस्थेभ्यो देवेभ्य आवासार्हं ॥ अदितिकौस
ल्या देवक्यादि देवताधिष्ठितं ॥ द्युप्रागपागुदक्प्रतीचोयदिति
शैषिको यत् ॥ तिंत्रिणी वृक्षमूलस्थं वल्मीकं अंतर्विशाल विव
रयुक्तं मलयेंऽच् वल्मीकं नाकुं नद्यां कूपतटे तरौ च विवरे

१५ शेलोचलो वाल्मिक इति प्राणेश्वरः॥ दृष्टवान् अभूदिति शेषः॥
इदमेवेदानीमज्ञातावासाय परंस्थानमिति मत्वा ततः मुदा इष्टदर्श
नजहर्षेण तत्र वामलूरी भगवान्जगदीश्वरो हरिः लीनः अंतर्हि
तः अभूदित्यन्वयः॥ बिलद्वारेणांतः प्रविश्य बिलसदनांत भोग
पर्यंके अपरिमिताप्राकृत शरीर भोग्य मानंदमनुभन्नास्ते शेते
च इतिभावः॥ वृक्षमूलस्थ वल्मीकत्वात्स्थास्य वातादिपीडाभाव
भगवानित्यनेनाणिमादि समग्रैश्वर्यात्क्या बृहच्छरीरस्य बिल
द्वारेणांतः प्रवेशः समाहितः॥जगदीश्वर इत्यनेन किं जग
न्नियंतुरसं वृतायां भूमावासीनता ऽअपितु मुक्तशेषपर्यंके
इति लभ्यते॥ एवं भावयितुरघहारी हरिरिति॥

नप्राप किंचिदास्थानं गूढनार्थं रमापतिः॥ इत्थंविचार्य
माणेतु स्वामिपुष्करणीतटे॥३२॥ दक्षिणे विमलं दिव्यं
वल्मीकं दृष्टवान्मुदा॥ तिंत्रिणी वृक्षमूलस्थं भगवान्ज
गदीश्वरः॥३३॥इदमेव वरंस्थानं तत्रलीनो भवद्धरिः॥

एवंकाल इति॥ विनोदकलहांतरित महालक्ष्मी कटाक्षेणाप्त
मज्ञातवासप्रकारेण श्रीनिवासस्य काले गते गतवति सति
वत्सरायुतमागतं प्राप्तं अभूत्॥ द्वापरेऽतीतः द्वापरे ऽतीते
षाविंशतितमः कलिरागतः॥ तत्र अष्टविंशतिमे अष्ट
विंशतितमे मडार्षः कलौ किंचित्संवत्सरे ऽतीते श्रीनिवा
सस्याविष्कारकाले प्रत्यासन्ने चोळराजो नृपोत्तमः अवत
रं समापन्नो नागकन्यातनूद्भवे अयमर्ध श्लोको ब्रह्मांडे
सप्तमे विस्तरेण व्याख्यातः॥ तथाहि किंचित्॥कलौ चोळ
नृपः कश्चिन्भविष्यति सुविश्रुतः सकदाचिद्वनेरंतु मार
टेन महीपतिः॥ शेषाचल वनोद्देशे विचचार मृगांतकः
मृगयाकृष्टचित्तोयं विचरन्कानने मुहुः॥ नलेभे विश्रमं
राजा ययेंद्रिय वशंगतः॥ ततस्तेन नरेंद्रेण कन्यका न
रूपिणी॥ नळिनोत्फुल्ल नयना चंद्रबिंबनिभानना॥ वि
श्व विस्मय लावण्या श्यामा पीन पयोधरा॥

राजहंसी चरंतीव दृष्टायौ वनशालिनी ॥ जहार चेतस्तस्येयं ना॥वं मा
क्षीवपुळिनं जलैः ॥ नशशाक ततो देशात्पदात्पदमपि स्वयं ॥ २
चलितुं नृपतिः तत्र व्याधबद्धमृगो यथा ॥ निर्जितः स्मरबाणे
न सोयं मर्म सुताडितः ॥ विसृज्य सर्वसैन्यानि तत्समीपं ययौ
नृपः ॥ ततः साच वरारोहा विलोक्य नृपतिं तदा ॥ विद्धा मद
-न बाणेन बभूवायतलोचना ॥ ततो राजा समागत्य पृष्ट्वा
न्मंजुभाषणीं ॥ कुलं शीलंच वृत्तंच तस्याः स्वयमनिंदितः॥
कात्वं चरसि कल्याणी वने विगतभीः कथं ॥ नचेत्परिग्रहोन्य
स्य वरांगे वद तत्वतः ॥ स्वयंतु कर्तुमात्मानं जीवितुं चत्वमि
च्छसि ॥ कन्यका ॥ धनंजयाभिधानस्य सर्पराजस्य धीमतः॥
पुत्रीव साभिपाताळे लालिता पितुरंतिके ॥ प्राणिग्रहणकाले
वै संप्राप्ते च पिता मम ॥ चिंतयामास कोवास्या द्भविता सदृशो
वरः ॥ पित्रा चानुमते चाहं अभि षं तव प्रभो ॥ बंधुभिश्च त
वाभीष्टै रनुमंतुमिहोत्सवे ॥ पितरं तव पृच्छस्व गत्वा पाताळ
मंजसा ॥ दास्यत्यनुमतिं नूनं गुणदर्शी तवस्वयं ॥ विनयं रक्ष
कल्याण कथंचिदपि चानघ ॥ चंद्रोदय विवृद्धो ब्धिः किं वेळा
मतिलंघते ॥ राजा ॥ नायं व्यतिक्रमः सुभ्रु ना धर्मश्चात्र वर्त
ते ॥ गंधर्वोयं विवाहोपि मुनिभिः परिकीर्तितः ॥ अतत्वरयनु
रक्तं मां कृतार्थयितुमर्हसि ॥ जीवितुं वा सुखावाहं त्वां विना
नचरोजये ॥ इति ब्रुति भूपाले कन्या कामवशंगता ॥ लज्जानत॥
मुखी भूमिं लिखंती नखरेणसा ॥ अथानया सगत्या लता
विटपसंश्रितः ॥ अन्वभूत्सुरतं तस्या भूयो रागविवर्धनं ॥
यामावशेषेथ दिने गंतुकामा कृतत्वरा ॥ नृपेणानुमथा साथ
निर्गतावरवर्णिनी ॥ ततः पाताळमाविश्य गत्वाच पितरंतिकं ॥
चोळराजस्य चरितं कथयामास सर्वशः ॥ नागराजोपि तच्छ्रुत्वा
कथितं कन्यया शुभं ॥ प्रहर्षमतुळं लेभे सदृशोयमितिब्रुवन्॥
निर्गत्य नृपतिश्चापि लताविटपसंश्रयात्॥ ससैन्येमावृत॥
स्तावत्प्रययौ निजमास्पदं ॥ आपन्नसत्वा ददृशे नागराज
स्य कन्यका ॥ अथ सा दशमे मासि पुत्रं प्रासूत सुंदरी ॥
दिने दिनेच ववृधे चंद्रमा इव सुंदरः ॥

एवं काले गते तत्र वत्सरायुतमागतम् ॥१४॥ अतीते द्वापरे
तत्र अष्टाविंशतिमेकलौ ॥ अतीते वत्सरे किंचि च्चोळराज
नृपोत्तमः ॥१५॥ अवतारं समापन्नो नागकन्या तदूदरे ॥

कस्यचित्वय कालस्य लालितो मातुरंतिके ॥ प्रप्रच्छ मातरं बालः
पितरं दर्शयेतिच ॥ तच्छ्रुत्वा पूर्ववृत्तांतं सा माता स्मै न्यवेदयत् ॥
तदाकर्ण्य बालो मातृदत्त बलेन भुवं प्राप्य राजानमाप्तवान् ॥ क
स्त्वमित्यब्रवीद्राजा ॥ अथ वृत्तं सर्वं न्यवेदयत् ॥ ततः परिग्रहे रा
ज संदिग्धे ॥ ततः आकाशे सुरवाणी ॥ माविचारय राजेंद्र पुत्रोयं
ते नसंशयः ॥ चक्रवर्ती महाराजो भविष्यत्यसमो भुवि ॥ अतीव
विष्णुभक्तश्च भविष्यति महामतिः ॥ शेषाद्रौ च स्वयं व्यक्तं विष्णु
मभ्यर्चयिष्यति ॥ तस्मै प्रीतः भगवान् चर्चाभावमतिक्रमन् ॥
संल्लापं तेन सुचिरं ॥ अभिषेचय राजेंद्र पुरं राज्ये विचारतः ॥
तदाकर्ण्य राजा नागकन्यासमागमदेशे पुरं निर्माय पुत्रं राज्येऽ
भिषेचयत् ॥ शशास पृथिवीं कृत्स्नां सशैलवनकाननाम् ॥ ततः
कदाचिद्गोपाला व्रजाद्राजार्थं क्षीरमानयंत आहुः ॥ शेषाचले व-
ल्मीक मार्गेण क्षीरानयने वल्मीक समीपे क्षीर भांडानि भज्यंते
न पश्यामोत्र कारणं इति ॥ अथ राजा देवकृतमेतदिति निश्चित्य
श्रीनिवासं ध्यायन् शुचिः सुष्वाप ॥ ततः स्वप्नं ददर्श प्रातरुत्थाय
मंत्रिण आहूय दृष्टं स्वप्नमाह ॥ स्वप्नेऽद्भुतः पुरुषो दृष्टः तमपृ
च्छं को भवानिति ॥ श्रीनिवासेन प्रेषितोस्मीत्याह ॥ अथ तं द्रष्टुं देव
देवेशं तद्विमानंच सुंदरं ॥ याहि शेषाचलं शीघ्रं इत्थमाह त्वा
न्समां ॥ अथ तेनैव सह तमगमं ॥ तत्र गत्वा विमानमद्भुतं दर्शया
मास ॥ ततः सोंतर्दधे ॥ तद्विमानंच स्वप्नो दृष्ट इत्याह ॥ अथ
मंत्रिणः संमन्याहुः ॥ वल्मीकांतरास्ते श्रीनिवासः सच त्वयि
कारुण्यं प्रातर्गोपालैः सूचितवान् ॥ पुनरात्रौ स्वप्ने द्रष्टः ॥ त्वयि
महाननुग्रहः ॥ श्रीनिवास त्येत्याहुः ॥ अस्मिन्नवसरे कश्चिच्छब
रः प्रियंगु जीवन आजगाम ॥ सोप्याह राजानं ॥ किमिति ॥ नूतन
धान्यं देवाय निवेदयित्वा भोक्ष्ये इति मम व्रतं ॥ तद्रक्षणे पुत्रं नि
योज्य मध्वर्थं वनमगमं ॥ तद्भक्षितं पुत्रेण ॥ तदा तं हंतुं अहमु
द्यतः ॥

भ.पु.॥ तदाकाश वाण्युवाच माव धीः पुत्रं इति ॥ तदेवेश्वर पूजनमिति॥ वेंकं-
अथान्यदप्युवाच ॥ राजानं प्रति गत्वा दृष्टं स्वप्नमभिज्ञानतयो
क्त्वा शेषाचलमागच्छेति वदेति ॥ अथ राजा गोपालवचनस्व
प्न शबरोक्ताकाशवाणी भि स्त्रिभि श्चोदके स्तेनैव सह बहुक्षी
र कलशान्यानाय शेषाचलमाययौ ॥८॥ अध्यायः ॥ ततः शबरे
ण सार्धं गत्वा तेन दर्शितं वल्मीकं दृष्ट्वा भगवद्दर्शनं कथं भवेदित्यु
वाच ॥ ततः शबरः तं भेदय निशितैः खनित्रै रित्याह ॥ सतान्नाभि(भि)
भेद भीतः ॥ अथाभ्य सिंचद्वल्मीकमेव क्षीरघटैः ॥ अथ दिव्यं र
त्नोज्वलं विमानं ददर्श ॥ अथ प्रीतः श्रीनिवासः आह ॥ वरं वृणी
ष्वेति ॥ अथ राजपुत्रः रूपमिदं नांतर्धान मियादिति ॥ ॐ इत्युक्त्वा
पुनराह स्वयं प्रीतः ॥ शबरसखोहं तवसखि त्वं प्रशास्य इति पु
नराहात्वहं त्रिसंध्यं मत्सेवा कुर्विति सोपि सेवा तत्परः तत्रैवास्ते
म श्री निवासोपि तस्य सेवाकाले अर्चाभावर्म्मिति क्रम्य तस्मै हित
मुपदिशति। सकन्यायदायाति दिवाकरस्तदा ध्वजो रोहादि अव
भृतांतं महोत्सवं करोति ॥ इति ब्रह्मांडे नवमः ॥ भूखंडमिति ॥
भिन्नं शकलखंडेव पुंसीत्यमरः ॥ क्षेत्रावे बहुधान्यदाः ॥ ननु
लिंगानुशासने पुमानित्यधिकारे रोपध इत्यनेन प्राप्तस्य पुं
स्त्व स्यापवाद तया द्वारादि सूत्रेण त्रंतं सलोप्रधं इत्यमरेण च
क्षत्र क्षेत्र मित्र कळत्रादीनां नपुंसकत्व विधानात्कथं क्षेत्रा इति
प्रयोग इति चेन्न ॥ सत्वादि गुणोपचय विवक्षया साधुत्वोपप
त्तेः अर्द्धर्चादित्वं वा कल्प्यं ॥ लीलया कृषावपि बहुधान्यदाः
इतरांगीकृते राज्ये यजनानंद तत्पराः ॥ इतरांग मपरगात्रं
अनितरांग मितरांगत्वेन संपद्यमानं कृतं इतरांगीकृतं ॥
तस्मिन्राज्ञेति शेषः ॥ तथाच राज्ञा राज्ये अपरगात्रीकृत इत्य
न्वयः ॥ ममेदमेकं गात्रं अपरमिदं गात्रमित्यभिमानेन पाल्य
मान इत्यन्वयः ॥ अंगगात्रांतिकोपाय प्रतीकेष्व प्रधानके दश
भेदेतु पुंसि स्यादगे त्यामंत्रणे अव्ययं इति नानार्थ रत्नमाला
यजनानंदतत्पराः यजनं यागः परमेश्वराराधनं च तन्निष्प
त्या जायमान आनंदो यजनानंदः ॥ तस्मिन्तत्परा आसक्ताः॥
सांगोपांग साधन निष्पत्तौ सत्यां साधकानां एवमानंदो जायते॥

श्री सांगोपांग साधन निष्पत्तौ सत्यां साधकानां एवमानंदो जा वें.मा
यते ॥ सांगोपांग साधन संपत्ति नांतरीयका वित्त व्ययायास ३
चिंतादय उत्तीर्णाः ॥ किमव शिष्ट मस्माकं फली भूतमानंद॥
नुभव मन्न मिति ॥ यद्वा यजन मिति सकलं विहित कर्मोपल
क्ष्यते ॥ आनंद इति ब्रह्म ॥ तयो स्तत्परा स्तन्निष्ठाः ॥ आनं
दो ब्रह्मेतिव्यजानात् ॥ आनंददो नंदनो नंदः इति तच्छ्रुति
नाम सुजना अभवन्निति शेषः ॥ तत्कालिक जना उभय
पथ निष्ठा नान्येन दुर्जिता इति भावः ॥ अथवा परम पुरु
षार्थोत्तमस्य प्रथमं ब्रह्म ज्ञान मंगं तदंगं विहितं कर्माभयं॥
तदंगे सदाचार प्रवृद्ध हविषी ॥ अत्र बहु पुष्प फल गो क्षीर
धान्यानि समृद्ध हवींषि पितृ पति पत्नी व्रतं सदाचारः ॥
अभ्यां मुक्तां गाभ्यां यानी तराण्यगानि स्वाम्यादि सप्तांगा
नि यस्य तत् इतरांगं ॥ तादृशी कृते राज्ये राज्ञः कर्मणि भा
वे वा इत्यर्थः ॥ मोक्षाध्याहार पक्षानंगीकारे राजा राज्यांगं
स्वामिपदेन गृहीतः ॥ स च श्रीनिवासः ॥ तद्भिन्नाणि स्वेत
राज्यामात्याद्यंगानि षट् तद्यस्य तत् ॥

---

राज्ञि शासति भूखंडं बहुपुष्प फल प्रदं ॥१६॥ बहु क्षीर दुघा
गावः पुत्रवै पितृ वत्सलाः ॥ काले वर्षति पर्जन्यः क्षेत्रा
श्च बहु धान्यदाः ॥१७॥ नार्यः पतिव्रताः सर्वाः स्वपत्न्यां
पुरुषा रताः ॥ इतरांगी कृते राज्ये यजनानंद तत्पराः ॥१८॥

---

तादृशी कृते राज्ये इत्येवं वा यदा स्वामी धनी न राजा तदा प्रथ
मत एवोक्तार्थः ॥ प्रथमार्थे यथा दृष्टिः शरीरस्य नित्यमेव
प्रवर्तते ॥ तथा नरेंद्रो राष्ट्रस्य प्रभवः सत्य धर्मयो रिति वशि
ष्ठनीतिः ॥ प्रमाणं इतरांगीकृत इत्यादि मोक्षाध्याहार सूच
कं ॥ स्वाम्यमात्य सुहृत्कोश राष्ट्र दुर्ग बलानि च ॥ राज्यांगानि
प्रकृतयः पौराणां श्रेणयोपि चेत्यमरः ॥ स्वामी राजेति वंद्य
घद्वः धनीत्य इति राज्ञा कृते राज्ये इतिपाठः सुगमः परंतु
इति शब्द महिम्ना वल्मीकगेन स्व सखिनाचा भावमतिक्रम्यो

 पदिष्ट हितेनराज्ञा तदाराधन महिम्ना भूखंडं बहुपुण्य 
फलं कृतं गावः बहुक्षीरदुघाः कृताः ॥ पुत्राः पितृवत्सलाः
कृताः ॥ पर्जन्यः काले वर्षण कर्ता कृतः ॥ इत्याद्येवं योजना
द्रष्टव्याः इतरांगीकरण यजनानंद तत्पर त्वयो र्भाव लक्षण॥
सप्तमी बोधित लक्ष्य लक्षण भावस्तु वशिष्टोक्तना
राज नीति सिद्धः ॥ १८ ॥ तस्मिन्काले विधिः साक्षाद्वेनुरूपं
समाश्रितः ॥ चोळराज गृहं प्राप्य द्रव्यमौल्येन वत्सका
इत्यंतमेकं वाक्यं ॥ एषाहि प्रकृति स्त्रीणा मासृष्टे रघुनंद
न समस्थ मनुरज्यति विषमस्थं त्यजंतिच ॥ शतद्रूदानां
लोलत्वं शस्त्राणां तीक्ष्णतां तथा ॥ गरुडानिळयोः शैघ्र्य
मनुगच्छंति योषितः ॥ इत्यगस्त्योक्त्य नीत्या स्त्रीणां विषम
स्थपत्य नारदः ॥ स्वभावः ॥ कासांचित्सा ध्वीनां सत्स्वभाव
स्तु सद्धर्म सिक्षादि सकारि सामर्थेन सहज शक्ति प्रतिकूल
नात ॥ ता अपि पुत्र पौत्रादिषु जातेषु तेषु च स्वमनोभीष्ट
दान निपुणेषु भर्तारं नाद्रियंते ॥ तेनाप्यव्याप्ते र्वार्द्धक्या
दन्यथा सिद्धेश्च ॥ तदा धर्मज्ञाः पुत्रादयस्तं परिचरेयुर
न्यथा सर्ववाच्या विवक्षतां भवति ॥ अतो मात्रानादरेपि
अस्माभिः सेवाकर्तव्येत्यत इति कथासंदर्भ वाक्य शेषः ॥
वत्सका ॥ अल्पो वत्सो वत्सकः सोऽस्यास्तीति वत्सका ॥
अल्पे इति कः ॥ तत अर्श आद्यच् तर्णकवतीत्यर्थः ॥ उप
चय चयापचय लक्षणे द्वे एव वयसी इति पक्षे तारुण्यस्य
प्राथम्यात्तरुण वाचि वत्स शब्दा द्वयसि प्रथम इति ङीषि
प्राप्तेनदपवाद तया अजादित्वा ट्टाप् वत्सा तरुणी सैव
वत्सका ॥ स्वार्थेकः ॥ तरुणीत्यर्थः ॥ त्रीणीति पक्षे बाल्य
वयोवाचि वत्सा शब्दादि वार्थेकः ॥ दर्शन आकारतो बाले
व फलतो वंजुला ॥ तथाच तंत्र न्यायेनात्रा र्थ त्रयं ॥ राज
गृह मित्यवि लंबाय ॥ अन्यथा पुरं प्रति प्राप्तो पर्याये
ण धनिकामात्य प्रधानादि गृहप्राप्त्या रत्नं हि भग.
वन्नेतद्र त्नहारीच पार्थिव इति न्यायेन राजभीत्या
तृणा चरणायापि अंतर्धाय चारयेयुः ॥

तस्मिन्काले विधिः साक्षाद्धेनुरूपं समाश्रितः॥
चोळराज गृहं प्राप्य द्रव्य मौल्येन वत्सका॥३९॥

तथाच श्रीनिवास सेवाकथं घटेत ॥ ननु माघटिष्टेदानीं काल
क्रमेण यदाचार चक्षुषा राजदृष्टिः तदा राजगृह प्राप्तिः तदा
संघटिष्यते ॥ सेवा इति चेत् ॥ यद्यपि संघटिष्यते तथापि
काल विलंब इति भावः ॥ भूत्वेत्य ध्याहारः ॥ श्रीनिवास सेवां
कुर्वे इतिच ॥ तथाचेत्थं योजना ॥ अतः तस्मिन् काले श्रीनि
वासस्य स्वात्माविष्करण काल इत्यर्थः ॥ साक्षात् विधिर्ना
भि जन्मानतु नियतिः ॥ वत्सका तर्णकवती तरुणीच वत्स
समानाकाराचया धेनुस्तादृशी भूत्वा द्रव्य मौल्येन चोळरा
ज गृहं प्राप्य श्रीनिवास सेवां कुर्व इत्यालोच्य धेनुरूपं
समाश्रित इति ॥३९॥ ब्रह्मा धेनुर्जातः ॥ को वत्सः को विक्रे
तेति श्रोतुविशेष जिज्ञासामधिक विधानायोक्रमनूद्य पूरय
न्नाह ॥ ब्रह्मा धेनुरित्यादिना ॥ जेष्टत्वाद्ब्रह्मा धेनुः ॥ औचि
त्यान्तत्पुत्रः ॥ शिवो वत्सः पुत्रादीनां दान विक्रययोः पितरौ
प्रभू इति ॥ असूर्यं पश्यानां राजदाराणां दर्शनार्थं च कम
लालया गोपाली जाता ॥ पुं योगे ङीष् ॥ पश्यंती पतिमार्गंतु
चोळराजान मभ्यगात् ॥ पत्युः श्रीनिवासस्य वल्मीके क्षीर
सेचन रूप सेवानुकूलो यो मार्गः । धेनूनां तृष स्वीकाराय
गमनागमन मार्गः तं पश्यंती सति कमलालया ॥ चोळराजा
नमभि अभिमुख विलंबाय शकुनायच अगात् ॥ अत्राभ्य
गादित्यनेन प्रतिपादिताभि गमन रूपार्थ शकुत्यायमर्थो
लभ्यते ॥ गच्छंतमभ्य गादिति किमे तावता प्राप्तं प्रापं
तथाहि ॥ राजा श्रीनिवास सेवायै गिरिं गंतुं सौधान्निर्ययौ ॥
तदैव धेनुरभ्यगात् ॥ तां दृष्ट्वा कन्या गोभेरि शंखदधि
फलकुसुमं पावकं दीप्यमानं यानं वा विप्रयुग्मं हयगज
वृषभं पूर्णकुंभ द्वयंच ॥ उद्धृत्या पेयकुंभं जलचरयुगळं
सिद्धमन्नं शवं वा वेश्यास्त्री मध्य मांसं शुभ शकुनमिदं

श्रा·पु· मंगळं मंगळानां इति शाकुनोक्त मार्गेण परार्थं नीयमानापि वें.२५.
मम शुभ शकुनमिदं सति संभवेन परित्याज्येत्यालोच्य राजा ३
किमियं क्रय्येति विचारयामास ॥ तथैवेत्याह गोपाली ॥ तन्ना
पि मम विवक्षा विशेषोस्तीति पुनराह ॥ गोपाली ॥ धेनुरियं न
साधारणी किंतु तर्णकवती तरुणी आकारे वत्ससमाना वंजु
ळा नैचिकी कामधेनुरिव ॥ अस्याः क्षीरममृतमिव ॥ एतत्पी
त्वा नरा अजरा अमरा अपारवीर्या अळिकेशा अतिकांतदृ
टरदना भवंति ॥ अतः त्वया त्वदीय साधारण धेनुगण निवि
ष्टतया दशानामेकादशेति न वेक्षणीया ॥ अपितु पृथगुपच
रणीया ॥ यद्यप्ये तद्धेनुरत्नं अनर्घ्य गुणं नमूल्यमाप्यते ॥ ममा
प्ये तत्परिक्रयणे तादृश्यापन्नास्ति तथापि मम यजमानस्य
योग क्षेमाय विक्रीणीये ॥ तथा विद्धासि चेदस्तु तथा ॥ अ
न्यथाऽन्यां गतिं गमिष्यामीति ॥ अथ राजा काममस्तु तथा
मम महालाभः त्वमंतःपुरं प्रविश्य संम्राज्ञ्यै वृत्तं वृत्तांतं
निवेद्य मूल्यं गृहीत्वा धेनुं दत्वा तया संमानिता स्वधाम
प्रविशेत्याह ॥२०॥ ततः किमभूदित्यत आह ॥ विक्रीत्वेति ॥

ब्रह्मा धेनुः शिवो वत्सो गोपाली कमलालया ॥ पश्यं
ती पतिमार्गंतु चोळराजानमभ्यगात् ॥२०॥ विक्रीत्वा
गां महालक्ष्मीर्जगाम निजधामच ॥ बहुक्षीरधरां
साध्वीं पुत्रार्थं तां पृथक्कृतां ॥२१॥

संरोहयित्वेति वत् साधु ॥ विक्रीय मूल्यं गृहीत्वा स्वस्व
त्वं परित्यज्य राज्ञी स्वत्वं संपाद्य वृत्तं वृत्तांतं निवेद्य ॥
तया प्रतिप्रादित तांबूल कुंकुम गंध माल्या सती निजधा
म करवीर पुरं जगामेत्यन्वयः ॥ अथ तां विक्रीतां धेनुं
बहुक्षीरधारां वंजुळां साध्वीं सुव्रतां दामसंधानं विना
पि सुदोह्यां अतएव पुत्रायेदं पुत्रार्थं धेनुवत्स क्षीरा
दि इति कृत्वा पुत्रादेशेनेतिवा ॥ पृथक्कृताम् ॥

भ.पु. कौशेयं दाम पृथगोष्ठं पृथक्प्रथम मध्यमोन्तम भेदेन त्रयो तर्व वें
शिका अधिकारिणः पृथग्दो ग्ध्री त्येवं पृथक्कृत तृणाचार प्रचार ३
विचारोपचार विजरा द्वारां चकारेति शेषः ॥ एवं वर्तमान वेळायां
धेनुर्गेहे बहु क्षीरं दो ग्धि ॥ एतदप्यमृतमिव पीत्वा राजादयः
अमरा इवा भूवन् ॥२॥ अथ कालांतरे राज्य भोग विरक्तो राजा
श्रीनिवास समीप एव कृतेन कुशलेन प्रारब्धमनिष्टं क्षपयि
ष्यामीति मना बभूव यदा तदा धेनुरपि वेंकटाचलं गंतु मुपक्रां
तेत्याह ॥ धेनुद्वय सहस्रेणेति ॥ श्री वेंकटाचले धेनुद्वय सहस्रे
ण साकं सह तृण स्वीकाराय सा गौः नित्यं गच्छति ॥ पृथकृता
मपि तां गोपालोपि पशूनां स्वस्वयूथ निविष्टतया यथा मनः
संचारे संतोषाति शयोऽतः साकं चरित्विति तत्याज ॥ स्त्रियो
जारेण तुष्यंति गावः स्वच्छंद चारतः ॥ कुंजराः पांसु वर्षेण
ब्राह्मणाः परनिंदयेति स्वभावोन्कैः ॥ तै राज धेनुगणैरित्या
दि सेत्यं तं एकं वाक्यं तथेति तंत्रं ॥ तथा चेत्थं योजना तै
राज धेनुगणैः तथा साकं गत्वा गत्वा तत्र वल्मीक देशे गत्वा
ति भक्त्यैव जगन्नाथस्य प्रीत्यर्थं धेनुरूपी पितामहः तत्र
वल्मीके क्षीर सेचनं सततं प्रतिदिनं मध्याह्ने सायाह्नेच यद्दा
करोति ॥ तदा सा चापि त्रिकाल दोग्ध्री तादृश्यपि धेनुः ॥ स
ततं प्रतिदिनं गेहे सायाह्ने क्षीरं नददाति इति ॥ क्षीरं नदद्दा
तीत्येवं ॥ काले दिन षट्कात्मके काले गते सति अतीते ॥ तदि
त्थं प्रथम दिने प्रथमाधिकारिणं प्रति दोग्ध्री धेनुर्नद
दातीत्याह ॥ किंकारणमित्युक्ते ॥ पुनः दोग्ध्राह ॥ क्षीर
स्यापि स्यादित्यहं दुहे ॥ वत्स पीत स्तने वास्ते ॥ आपी
ने ईषदपि क्षीरं नास्ति ॥ धेनुः किं कुर्यात् अहमपि
किं कुर्वे इत्येकं दिनं गतं ॥१॥ ततः परदिने प्रथमा
धिकारी स्वयं परीक्षां चकार सोप्याह दोग्ध्रीव म
ध्यमं ॥ देनुः नददातीत्यादि इति द्वितीयं ॥२॥ ततः
परदिने मध्यमः सोप्याहोन्तमं पूर्ववत् इति तृतीयं
दिनं ॥३॥ ततः श्वः उत्तमः सेप्याह संराज्ञीं पूर्ववत् ॥
इति चतुर्थं ॥४॥ ततः परदिने साम्राज्ञी स्वयं इति पंच
मं ॥५॥

ततः परं नक्तं दिवा संम्राज्ञी स्वयमेव स्वसमक्षं धे
नुमाबध्य पक्षां चकार तदा त्रिकालं दुदोहेति ॥ अंत
र्विचारो निवृत्तः ॥ ततः किमभूदित्यथ आह ॥ तस्मा
दिति ॥ तस्मात् बहिर्विचारस्यावसर प्राप्तत्वात् ॥२१॥

धेनुद्वय सहस्रेण साकं श्रीवेंकटाचले ॥ सागौर्गच्छति
नित्यं नै राजधेनु गणैस्तथा ॥२२॥ तत्र गत्वाति भक्त्येव
वल्मीके क्षीरसेचनं ॥ जगन्नाथ प्रसत्यर्थं धेनुरूपी
पितामहः ॥२३॥ करोति सततं गेहे न क्षीरं च ददाति
सा ॥ एवं काले गते तस्मा च्चोळराज सती स्वयं ॥२४॥
धेनुपालं समाहूय इदं वचन मब्रवीत् ॥

गवां पालकेति ॥ षष्ट्या आक्रोश इति षष्ट्या अलुक् ॥ आः किंरे
गोपाल धिग्दुर्बुद्धे किं करिष्यति तत्पयः पिबसि विक्रीणीषे
वा ॥ नाहंच चक्षुषा सह पश्यामि किं कुर्यां स्वामिनी । इति गो
पेनोक्ते ॥ तदा राज्ञाह ॥ सत्यमेतत् ॥ यतो नि: शेष पीत पीत
स्तने वास्ते धेनुरतो ब्रवीमि शृणु त्वं भुंजस इति ॥ त्वं भुंजसे
अथवा वत्सो भुंजत वद मे ऋतं ॥ राज्ञी कोपस्यास्मिकत्वस्य
वचनस्य कोपपरवशत्वस्य च सूचनाय भुंजेः शप्य प्रसिद्धस्य
प्रयोगः ॥ स्तनमिति शेषः ॥ साक्रोश वचनस्य फलमाह ॥
भय विह्वळ इत्यादि सगद्गद मित्यंतेन ॥ भय विह्वळः भयेन
प्रवाते कदळीवत्कंपमानः उवाचेत्यादि श्लोक द्वय मेकं वाक्यं ॥
मंदम पटु सगद्गदं गद्गदेन स्खलतेन सहितं ॥ गद्गवाक् स्खल
न इति धातुः ॥ विशिष्टस्य विशेष्य समवधाने विशेषण मात्र
परत्वं ॥ किंकरिष्यसीत्यस्योत्तरमाह ॥ नजान इत्यादि पय इ
त्यंतेन ॥ तत्कर्म क्रय विक्रय रूपं कर्म ॥ यद्यपि पयः पानलक्ष
णं कर्म जाने । गोपालत्वात् ॥ तथापि राजार्हं नै तत्पयः पी

भ·पु· कौशेयं दाम पृथगोष्टं पृथक्प्रथम मध्यमोत्तम भेदेन त्रयों तर्व वें॰ ३
शिका अधिकारिण: पृथग्दोग्ध्री त्येवं पृथक्कृत तृणाचार प्रचार
विचारोपचार विजरा द्वारां चकारेति शेष: ॥ एवं वर्तमान वेळायां
धेनुर्गेहे बहु क्षीरं दोग्धे ॥ एतदप्यमृतमिव पीत्वा राजादय:
अमरा इवा भूवन् ॥२॥ अथ कालांतरे राज्य भोगविरक्तो राजा
श्रीनिवास समीप एव कृतेन कुशलेन प्रारब्धमनिष्टं क्षपयि
ष्यामीति मना बभूव यदा तदा धेनुरपि वेंकटाचलं गंतु मुपक्रां
तेत्याह ॥ धेनुद्वय सहस्रेणेति ॥ श्री वेंकटाचले धेनुद्वय सहस्रे
ण साकं सह तृण स्वीकाराय सा गौ: नित्यं गच्छति ॥ पृथक्कृता
मपि तां गोपालोपि पशूनां स्वस्वयूथ निविष्टतया यथा मन:
संचारे संतोषाति शयोऽत: साकं चरित्विति तत्याज ॥ स्त्रियो
जारेण तुष्यंति गाव: स्वच्छंद चारत: ॥ कुंजरा: पांसु वर्षेण
ब्राह्मणा: परनिंदयेति स्वभावोक्ते: ॥ ते राज धेनु गणोरित्या
दि सेत्यं तं एकं वाक्यं तथेति तंत्रं ॥ तथा चेत्थं योजना ते
राज धेनु गणो: तया साकं गत्वा गत्वा तत्र वल्मीक देशे गत्वा
ति भक्त्यैव जगन्नाथस्य प्रीत्यर्थं धेनुरूपी पितामह: तत्र
वल्मीके क्षीर सेचनं सततं प्रतिदिनं मध्याह्ने सायाह्ने च यद्
करोति ॥ तदा सा चापि त्रिकाल दोग्ध्री तादृश्यपि धेनु: ॥ स
ततं प्रतिदिनं गेहे सायाह्ने क्षीरं नददाति इति ॥ क्षीरं नददा
तीत्येवं ॥ काले दिन षट्कात्मके काले गते सति अतीते ॥ तदि
त्थं प्रथम दिने प्रथमाधिकारिणं प्रति दोग्ध्री धेनुर्नद
दातीत्याह ॥ किंकारण मित्युक्ते ॥ पुन: दोग्ध्र्याह ॥ क्षीर
स्यापि स्यादित्यहं दुहे ॥ वत्स पीत स्तने नास्ते ॥ आपी
ने ईषदपि क्षीरं नास्ति ॥ धेनु: किं कुर्यात् अहमपि
किं कुर्वे इत्येकं दिनं गतं ॥१॥ तत: परदिने प्रथमा
धिकारी स्वयं परीक्षां चकार सोप्याह दोग्ध्रीव म
ध्यमं ॥ देनु: नददातीत्यादि इति द्वितीयं ॥२॥ तत:
परदिने मध्यम: सोप्याहोत्तमं पूर्ववत् इति तृतीयं
दिनं ॥३॥ तत: श्व: उत्तम: सेप्याह संराज्ञीं पूर्ववत् ॥
इति चतुर्थं ॥४॥ तत: परदिने साम्राज्ञी स्वयं इति पंच
मं ॥५॥

श्री·पु· ततः परं नक्तं दिवा संम्राज्ञी स्वयमेव स्वसमक्षं धे वें·मा·
री नुमाबध्य पक्षां चकार तदा त्रिकालं बुद्धो देति ॥ अंत ३.
विचारो निवृत्तः ॥ ततः किमभूदित्यथ आह ॥ तस्मा
दिति ॥ तस्मात् बहिर्विचारस्यावसर प्राप्तत्वात् ॥२४॥

धेनुद्वय सहस्रेण सार्कं श्रीवेंकटाचले ॥ सागोर्गच्छति
नित्यं तै राज धेनु गणैस्तथा ॥२२॥ तत्र गव्वाति भक्त्येव
वल्मीके क्षीरसेचनं ॥ जगन्नाथ प्रसत्यर्थं धेनुरूपी
पितामहः ॥२३॥ करोति सततं गेहे न क्षीरं च ददाति
सा ॥ एवं काले गते तस्मा च्चोळराज सती स्वयं ॥२४॥
धेनुपालं समाहूय इदं वचन मब्रवीत् ॥

गवां पालकेति ॥ षष्ट्या आक्रोश इति षष्ट्या अलुक् ॥ आः किंरे
गोपाल धिग्दुर्बुद्धे किं करिष्यति तत्पयः पिबसि विक्रीणीषे
वा ॥ नाहंच चक्षुषा सह पश्यामि किं कुर्यां स्वामिनी । इति गो
पेनोक्ते ॥ तदा राज्ञाह ॥ सत्यमेतत् ॥ यतो निः शेष पीतपीत
स्तने वास्ते धेनुरतो ब्रवीमि शृणु त्वं भुंजस इति ॥ त्वं भुंजसे
अथवा वत्सो भुंजत वद मे ऋतं ॥ राज्ञी कोपस्यास्मिकलस्य
वचनस्य कोपपरवशत्वस्य च सूचनाय भुंजेः शप्य प्रसिद्धस्य
प्रयोगः ॥ स्तनमिति शेषः ॥ साक्रोश वचनस्य फलमाह ॥
भय विह्वळ इत्यादि सगद्गदमित्यंतेन ॥ भय विह्वळः भयेन
प्रवाते कदळीवत्कंपमानः उवाचेत्यादि श्लोक द्वयमेकं वाक्यं ॥
मंदम पटु सगद्गदं गद्गदेन स्खलतेन सहितं ॥ गद्गवाक् स्खल
न इति धातुः ॥ विशिष्टस्य विशेष्य समवधाने विशेषण मात्र
परत्वं ॥ किंकरिष्यसीत्यस्योत्तरमाह ॥ नजान इत्यादि पय इ
त्यंतेन ॥ तत्कर्म क्रय विक्रय रूपं कर्म॥ यद्यपि पयः पानलक्ष
णं कर्म जाने । गोपालत्वात् ॥ तथापि राजार्हं नै तत्पयः पी

भ.पु यते दर्शनमेव नास्ति किमुत पयः पानमिति भावः॥ त्वं भुंजविं-मा
स इत्यादि ऋतमित्यं तस्योत्तरमाह॥ स्वयमित्यादि कुरुतामि २
त्येतेन इती त्यस्य वचनमिति पूर्वेणान्वयः॥ विह्वलेक्षणा वि
भ्रांतेक्षणा रज्जुभिः दामभिः बाहू बंधयित्वेति शेषः॥चर्म
तोरणैः चर्मणः कृतैः तोरणैः मंगल्य तोरणसाधन भूत
पुष्प चूत पल्लवाद्याकार शकलैः॥ अनेन राजाज्ञया राजभव
कृत ताडनोत्थांकमपि पुष्पपलाशाद्याकारेण मंगल्यमिति सूच
यति॥ अरे गोपाल यद्यस्मिन्नेव दिने क्षीराप हर्तारं मानयसि
सि तर्हि मोक्ष्यसे नान्यथा इत्येतत्सत्यमिति राज्ञी शास्तिमक
रोत्॥ रज्जुं त्यक्त्वा त्याजयित्वा॥३०॥ धेनुरप्यचलं दिव्यं वल्मी
के हरिमंदिरे इति॥ गत्वा तत्रत्य इतिच शेषः॥

गवां पालक दुर्बुद्धे किं करिष्यति तत्पयः॥२८॥ त्वं
ते भुंजसेऽथ वा वत्सो भुंजसे वद मे ऋतं॥ इति राज्ञी वचः
श्रुत्वा गोपालो भयविह्वलः॥२६॥ उवाच वचनं मंदं
राज भार्यां सगद्गदं॥ नजानेऽहं च तत्कर्म न मया पी
यते पयः॥ स्वयं पिबति वा वत्सः पिबतीति न विद्म
हे॥ सत्यं वचनमेतद्धि विचारं कुरुतामिति॥ इति
गोपाल वचनं श्रुत्वा सा विह्वलेक्षणा॥ ताडयामास
तं गोपं रज्जुभिः चर्मतोरणैः॥ ततः परदिने प्राप्ते
ताडितो राज भार्यया॥ धेनुकंठस्थ रज्जुंतु त्य
क्त्वा तत्पृष्ठतो ययौ॥३०॥ धेनुरप्यचलं दिव्यं व
ल्मीके हरिमंदिरे॥ अभिषेकं चकाराशु स्व
पयोधर चारुभिः (चारुभिः)॥ ३३॥

धेनुरपि दिव्यं देवावासयोग्यं॥ अचलं शेषाचलं गत्वा॥
तत्रत्ये हरिमंदिरे वल्मीके। आशु एक दिन व्यवधाना-तृण
भक्षणादिना विलंबमकृत्वा स्वपयोधर चारुभिः स्वीयानि

स्वाऽसाधारणानि यानि पयोधर चारणानि क्षीर
त्याजनानुकूल संचलनोपयोगि व्यापार विशेषास्तैः ॥
चाकणैरिति पाठे चक्यंते तर्प्यंते क्षीर समर्पण द्वारा वत्सा
ए ऽभिरिति चकणानि स्तनाननानि तैरित्यर्थः ॥ चक तृ
प्ता वित्यस्मा ण्णिजंता त्करणे ल्युल् ॥ पृषोदरा दित्वादं
गणवणः ॥३१॥ तां क्षेराभिकं कुर्वाणां ॥ हस्तमात्रकं।
हस्तः प्रमाणमस्य हस्तमात्रं ॥ तदेव तकं प्रमाणे द्वयस
जित्यादिना मात्रच् ॥ स्वार्थेकन् ॥ अत्रेदं बोध्यं ॥ धेनुपः
तां धेनुं दृष्ट्वा आलोचयामास ॥ किमिति ॥ अस्मिन्व
ल्मीकेंत महद्भूतमस्तीति किं वदन्ती अतस्तस्यैवेदं कृ
त्यं महद्भूतं तावदन्याहत निजपरवशीकरण सामर्थ्येन
धेनुमात्मसात्कृत्य धेनुं दुग्धं दोग्धि ॥ तदनीशा धे
नुः किं कुर्यात्। अतस्तदेवाकार्यमिति ॥ अतो हेतंनिर्लि
नं बहिरायाहि क्षीरापहर्तारं त्वां साम्राज्ये निवेद्य अहं जीवा
मि ॥ नान्यथा मज्जीवनं यदीतोपि बहिर्नायास्यसि तर्हि तव
मातृसमां धेनुं हनिष्यामि ॥ तथासति तव मातृहनन धे
नु हनन धेनुपहननानि बहु नरक फलानि पातकानि भवंति॥
इत्युवाचेति ॥ इतोप्यनागते कोपात्कुठारं वृक्ष वृश्चनं तर
सा हस्तयोर्ध्व धृत्वागां चागृह्य ॥३२॥ वात्सल्यं भक्ताभिलाषं
दर्शयन्नभिव्यक्तीकुर्वन् ॥ हरिः श्रीनिवासः ॥ अर्थांतरन्या
सेन स्वकर्तव्यं निरूप्य तत्प्रहारं धेनोर्विमोच्य स्वयं दधा
रेत्याह ॥ स्वभक्त हननमित्यादि ॥ जगत्पतिरित्यंतेन ॥ यः
पुमान् आत्मार्थं स्वजीवनाय स्वभक्त हननं घातनं वा
यदिचरेत् तर्हि सएव हंतेव वा घातक एववा ॥ यावदा
चंद्रतारकं लोके इहामुत्र च नरकं दुःखं भुंक्ते ॥ हतस्तु
अमुत्र सुखं लभते ॥ स्वामिकार्य हत प्राणत्वात् इति
सामान्यांशं निरूप्य विशेषांशं निरूपयति ॥ मदर्थं चेति॥
एतन्मम महद्दुःखं इति मत्वा इति निरूप्य तुलसीमात्र
दलेन केवल तुलसी तुलसीमात्रं तस्या यदेकं दलं तेना
पि अपिरन्ववसर्गार्थे ॥ पत्रं पुष्प फलं तोयमित्यादेः पूजा
ते ॥

भ.पु. पूजां कुरुते करणाणि चोलोप आर्षः ॥ अत एव नरोत्तमस्तं ॥ वें.मा.
धो मत्पणः मन्मूल धनं ॥ मम शपथो त्सृष्ट धनादिवा ॥ पणो २.
द्यूतादिषूत्सृष्टे भृतौ मूलधनेपि चेत्यमरः ॥ सकृदेव प्रपन्ना
य तवास्मीतिच याचते ॥ अभयं सर्व भूतेभ्यो ददास्मेतद्व्र
तं ममेति श्री रामवचनं ॥ क्षीराभिषेचनेन पूजयंत्याधे
नो रक्षणं कर्तव्यमित्यत्र किं निरूपणीयं ॥ विचार्य निरूप्य
या विगृह्य विश्लिष्य विभेद्येति यावत् ॥ खड्गं भेदेन समर्थं
खड भेदने ॥ बाहुलका करणेगन् ॥ तत् घातं कुठार प्रहारं
कुठं वृक्षं आराति इति कुठारः ॥ वृक्ष व्रश्चनः ॥ तेन असे
धारेव धारा असि धारा सास्यास्ती त्यसि धारी तेन कुठा
रेण तद्दारव्यायु धेन ॥ ३७ ॥ शिर स्फोटं शिरोविदळनं ॥ सप्त
ताळप्रमाणेन सप्तानां ताळानां समाहारः सप्तताळं तच्च
तत् प्रमाणंच तत् तेन विस्तृत मध्यमांगुली युतत तांगु
ष्टः ताळः ॥

तां दृष्ट्वा धेनुपः कोपात् कुठारं हस्तमात्रकं ॥ उद्धृत्यतर
सागांच यशेद्योगं समाचरत् ॥ ३२ ॥ तदा वल्मीकगः स्वामी
वात्सल्यं दर्शयन्हरिः ॥ स्वभक्त हननं लोके आत्मार्थं यः
पुमान्चरेत् ॥ ३३ ॥ स एव नरकं भुङ्क्ते यावदाचंद्र तारकं ॥
मदर्थं च कुठारेण हनिष्यति च गां खळः ॥ ३४ ॥ इति मत्वा
रमाकांतः श्री निवासो निरामयः ॥ एकेन तुळसी मात्र दळे
नापि नरोत्तमः ॥ ३५ ॥ पूजते भक्ति भावेन तं रक्षामीति
मत्पणः ॥ इत्थं विचार्य गोविंदः तत्प्रहारं विगृह्य च ॥ ३६ ॥
स्वयं दधार तद्घातं मौळौ खड्गं जगत्पतिः ॥ कुठारे
णासि धारेण ताडितो वेंकटेश्वरः ॥ ३७ ॥ शिरस्फोटं
समापन्नः कुठारेण द्रुमारिणा सप्तताळ प्रमाणेन
रक्त स्फूर्तिर भूत्तदा ॥ एवं कोलाहलं दृष्ट्वा गोपालो
मरणं ययौ ॥ इति गोपालके सा गौरवरुह्य गिरेस्त
टात् ॥ ३९ ॥ राजानं समनुप्राप्य वत्स हीनाति दुःखि
ता ॥ लुंठनं परिचक्रे य राजाग्रे राजमंदिरे ॥ ४० ॥ तां
दृष्ट्वा विह्वळांगींच लुंठतीं मृत वत्सकां ॥

भ.पु प्रादेश ताळ गोकर्ण स्तर्जन्यादि युतेतत इत्यमरः॥ रक्त वें.मा.
स्फूर्तिः रक्तोद्गमः॥ कोलाहलः भीजातगोपक्षि मृगादि ३
कलकल ध्वनिः॥ जात मात्रा मृगा इत्यादेः लुंठनं परि
वर्तनं॥ लुठि परिवर्तनमिति धातुः॥ मृतवत्सका मृत
वत्सा यस्या सा तया मृत वत्सेव मृत वत्सका तां॥ इवा
र्थे कन्॥४०॥ किमर्थं लुंठती चारत्यक्त्वा गोसंततिं
कुतः इति॥ गो संतति त्यागे किं निमित्तं॥ अथापि लुं
ठनं किमर्थमिति भावः॥ संमेजय मिळितां कुरु परि
मितामिति दीर्घ आर्षः॥ किमिदं भो महत्पापं केन पापे
न वैकृतं किं वितर्के वितर्के किं किमुत च चेत्यमरः॥ मह
त् पापं इति च्छेदः। भो स्वामिन् श्रीनिवास॥ महत् बहु
पापं पाप साधनं इदं रक्तादि अनिष्टं किं स्यात् कस्य स्या
त्॥ तव वान्यस्य वा केन पापेन पापिना इदमिति निर्दिष्टं
स्पष्टयति॥ धेनुपालस्येत्यादिना जातमित्यध्याहृतस्यो
भयत्रान्वयः॥ ४८॥ सगद्गदो कंठ समाकुलाननः॥
गद्गदेन वाकस्खलनेन सहवर्त वर्तत इति सगद्गदः ता
ज्जृं दृशः उज्जृंभित कंठो यस्य स तथा॥

किमर्थं लुंठती चार त्यक्त्वा गोसंततिं कुतः॥४१॥ गवा सार्द्धं
गच्छ चार संमेजय गवां गणं॥ इति राज्ञा समादिष्टः चार
स्तत्पृष्टतो ययौ॥४२॥ आरुह्य वेंकट गिरिं वल्मीकाग्र
मुपागतः॥ पतितं धेनुपं दृष्ट्वा वल्मीकाग्र समाश्रयं॥४३॥
रक्त वृष्टिं घोरतरां सप्त ताळ परीमितां॥ स विह्वलो नृ
पचरो जगाम नृप मंदिरं॥ उवाच तत्र भावंच वल्मीका
ग्र समुत्थितं॥ रक्तवृष्टिं ततः श्रुत्वा राजा विस्मित मा
नसः॥४८॥ आरुह्य नरयानंच शीघ्रेणागात् वृषाचलं॥ किमि
दं भो महत्पापं केन पापेन वैकृतं॥४६॥ धेनुपालस्य मरणं
वल्मीकं रक्त पूरितं॥ इति राज वचः श्रुत्वा वल्मीकस्थो
जगत्पतिः॥४७॥ उद्भिद्य वल्मीकमनंत वीर्य अनंत शै
लेंद्र तळं समाश्रितः॥ श्री स्वामि तीर्थस्य च दक्षिणे शुभे
वल्मीक संस्थो भगवानुवाच॥ ४८॥

१.पु. तादृश श्चासौ समाकुलाननश्च संभ्रांताननश्च ॥ बहुकष्टया दे
बहुदुःखसाधनया महोन्नत सर्वथा नम्रशिरः ॥ सुभ्रातेव
सौभ्रात्रं प्रहाधणसुभ्रातृरहितं ॥ कुटिलं अऋजुं एतादृशं
मां जानासि इति शेषः ॥ हे नृप श्रेष्ठे तादृशोहं दयाहीनेन धेनु
पेन कुठारेणासि धारिणा ताडितः ॥ तेन शिरोभिन्नं तत् तस्मा
त् दुःखं अतुलं ह्यभूत् ॥ अतो दुर्मते दुर्बुद्धे इत्युक्त्वा देवः
भागवान् श्रीनिवासः ॥ ९४ ॥

सगद्गदो कंठ समाकुलाननः संरक्तनेत्रोद्भव वारिपूरितः ॥
चोळं नृपेंद्रं बहुकष्टया गिरा सशंखचक्र प्रतिमां समाश्रितः ॥ ८९ ॥
पापिष्ठोसि दुराचार राज्यगर्व महोन्नत ॥ अनाथं भक्तपालं
मां दरिद्रं वनचारिणं ॥ ९० ॥ पितृमातृविहीनंच भार्या
बंधुविवर्जितं ॥ सौभ्रात्रहीनं कुटिलं कुठारेणासि धारिणा ॥ ९१
ताडितोहं नृपश्रेष्ट तद्दुःखमतुलंह्यभूत् ॥ शिरोभिन्नं
धेनुपेन दयाहीनेन दुर्मते ॥ ९२ ॥ इत्युक्त्वा भगवान् देवः
शशाप नृपपुंगवं ॥ पिशाचो भव दुर्बुद्धे मद्दुःखदान
कर्मणा ॥ ९३ ॥ इत्थं शप्तो नृपश्रेष्टः सोप तच्छापमू
र्छितः ॥ मुहूर्तांते समुत्थाय प्रोवाच जगदीश्वरं ॥ ९४ ॥
इति श्रीमद्भविष्योत्तर पुराणे वेंकटगिरि माहात्म्ये
तृतीयोध्यायः ॥ ३ ॥

श्री भविष्योत्तर पुराणस्य व्याख्याने कल्याणकांडदीपे
श्रीनिवास हैय्यंगवीन स्नेह गुण प्रकाशो नाम तृतीयोध्या
यः संपूर्णः ॥ श्री श्रीनिवासार्पणमस्तु हरिः ॐ ॥ ३ ॥

भ॰पु॰ ॥ - श्री ॥ श्रीनिवासायनमः ॥ श्रीयः पतिं श्रीनिवासं श्रीवत्स वें॰म॥
कृत लक्षणं ॥ श्रीकंठ कृतकैंकर्यं श्रीमही महितं भजे ॥३॥
चतुर्थे व्याख्येयानि व्याक्रियंते ॥ देवक्रीडादि गुण विशिष्ट ॥ २
श्रीनिवास ॥ अपराध विवर्जितं ॥ शापमूलापराध रहितं ॥ मां ॥ अवि
चार्य ॥ अपराधमविमृश्य ॥ किमर्थं ॥ अर्थ शब्दो हेतौ ॥ किं निमि
त्तं ॥ शप्तवानभूः ॥ यदि त्वं न भृगुवद विमृश्यकारी ॥ तदा मया ॥
किं पुरा दुरितमाचरितं ॥ तदहं न जाने ॥ जगन्नाथ ॥ अतीत अना
गत वर्तमान जगन्नियामक ॥ त्वमेव तज्जानासि ॥ इति तेन ॥
राज्ञा समाज्ञप्तः ॥ समाक्षिप्तः ॥ श्रीनिवासोऽति दुःखितः ॥
भक्तमेवमज्ञानी जात इति संजात दुःखः ॥ मंद वचनं ॥ दीन व
चनं ॥ अंतरार्थे हर्षकारि वचनं ॥ शाप मूर्छितः ॥ शाप मोहि
श्रे तः ॥ तं ॥२॥ तद्वचन प्रकारमाह ॥ पापिष्ट इत्यादिना ॥ बाह्यार्थे ॥
पापिष्टः अतिपापी ॥ दुराचारः दुष्ट आचारो यस्य सः । तथा ॥
अविचारी अविमृश्यकारी ॥ अति दुःखेन क्षतज वेदना जातेन ॥
अज्ञानेन अज्ञत्वा ॥ वृथा ॥ अनिमित्तं यः शापो मया दत्तः ॥
तं मयार्पितं शापं अनुगृहाण ॥ यथा मया भृगु शापः अपरथा
ममानृतं स्यादिति दैन्यं ॥ अस्त्वनृतं किं भयमित्यत आह ॥
मच्छाप इति ॥ वेदविरोधो भयमिति भावः ॥ नानृता त्पातकं
परमिति दर्शनाच्च ॥ न विष्णोर्वचनं क्वापि मृषा भवति
कुत्रचिदित्यादि वचनात् ॥ ७॥ अंतरंगार्थस्तु विपरीत
लक्षणया पापिष्ट इत्यादीनां क्रमात् ॥ अहं पुण्यवान् ॥
सदाचारः ॥ विमृश्यकारी ॥ भक्त एवं जात इत्यति दुःखे
न ॥ ज्ञात्वैव ॥ अनुग्रहात् ॥ वृथा ॥ अवश्य मनु भोक्तव्य
प्रारब्धं निमित्ती कृत्य मयार्पितं ॥ त्वं गृहाणेत्याहेति ॥
शक्येन सह संबंधात्सा दृश्या त्समवायतः ॥ वैपरीत्यात्क्रि
यायोगाल्लक्षणा पंचधा स्मृते त्युक्तेः ॥ पाप जने पुण्यज
न इति विपरीत लक्षणाय थेति ॥ मच्छाप इत्यादि अस्मिं
न्नर्थे स्पष्टं ॥ अथवा वचना वृत्या पानि पापानि अनिष्टानि
धा येन स तथा ॥ पंक्लीबे हेम्नि पापा प्रधनयोरिति वैजयंती ॥
अन्ये दुष्कराचारः ॥ सर्वसाक्षात्कारित्वा दविचारी ॥ शिष्टमुक्तं

भ·पु· भक्तेषु मामकः कोपः प्रसादः॥ किंचनाहं पापिष्टादिः॥ किंतु त्वमेव पापिष्टो दुराचारोऽविमृश्यकारीच॥ तत्कथं॥ धेनुर्नदृष्टा तीति द्विनषट्कं गतं॥ कुतो न विचारितं॥ गोपाल्युक्तमपि विस्मृतं तत्कुत इत्युक्ते प्रारब्धा दृष्टानादिति वक्तव्यं॥ अतः प्रारब्धवश दृष्टानादविचारेण गोपालस्य ताडनायनिष्ट परं पराजाता॥ अत स्त्वया सम्मा धातव्यमिति चेत्तर्ह्येवं त्वमपि समाश्रितो भवकुतः ति दुःखं॥ इति उक्ते कुतो मम दुःखं मया वृथा॥

॥हरिः ॐ॥ राजोवाच॥ किमर्थं शप्तवान्देव अपराध विवर्जितं अविचार्य जगन्नाथ किं मया चरितं पुरा॥३॥ इति तेन समाज्ञप्तः श्रीनिवासोति दुःखितः॥उवाच मंद वचनं राजानं शापमूर्छितम् श्रीनिवासः॥ पापिष्ठोहं दुराचार अविचारी नृपोत्तम॥अज्ञाने नाति दुःखेन वृथा शापो मयार्पितः॥३॥ मच्छापो नानृतो माया दिति वेद विदो विदुः॥ यावत्कलियुगं तिष्टे, तावद्दुःखी भवेन्नृप

मिथ्याति दुःखेन शापो दत्त इति भावः॥ इदं दुःखं कियत्कालं भवेदित्याशंकयामाह॥ यावदिति॥ हेनृप यावत्कलियुगं तिष्टेत् प्रवर्तेत तावत्वं दुःखी भवेदिति मम भाति॥४॥एवमतीतानागत ह. ज्ञानीत्वं कुतो भाव्य निष्टमावयोनपरिहृतवान् त्वमर्चाभावमति क्रम्य देवरहस्यमपि मां उपदिशसि कृत एतादृशेन त्वया नाहं बोधितः॥ त्वंच कुठार प्रहारात् कुतो न रक्षित इत्यत आह॥उभा वित्यादिना॥ यद्यपि सत्य संकल्पो महान्गुण इति मयात्म सा कृतः॥ तथाप्यावयोर्दुःखसाधनत्व दोषी भूतः॥ इति दोषत इत्युक्तिः॥ शेषत इति पाठे सत्य संकल्पे संकल्पितेषु बहुशो रा मावतारे उपभुक्तादन्यः शेषः तस्मादित्यर्थः॥ शेषोनंतो बली शेषं त्रिष्वन्यदुपयुक्त इति रत्नमाला॥ राजपक्षे शेषतः॥ पित्र दर्शनादरायुपभुक्त शेषः॥ दुःखसमापन्नावावां बभूविव॥ सच सत्यसंकल्पः कीदृशः॥ तथाहि॥ पुरानिंद्रं लोकमिच्छंती काव्यमाता धर्मपरदेव पक्षपातेन उपेंद्रावतारेण मया निषूदिता

भ·पु· अथ भृगुणाति दुःखेना विमृश्य तव स दुःखं मानुषं जन्म भार्यया वेंगा॥
कलहादिकं स्यादिति शप्तः॥ अयस एवा विमृश्य दत्त इति संके ✱
स्वयं संतप्तः॥ अथ नानृती स्यामहमिति तपसा तोषितेन मया शापो
नुगृहीतः॥ सचमया रामावतारे बहुशो नु भूयेदनीं तच्छे शमनु
भवामीति॥ तव दुःखे संकल्पस्तु अतीतानागत ज्ञानी त्रैलोक्यो
द्धरण क्षमः॥ एतादृशोपि नाचारं श्रौतं स्मार्तं परित्यजेत् इति
स्मरणात् तव माता पितृभ्यां सोन्तम सोमादि देव पतित्वादि संपाद
क विवाहादि नामांताचारा नादरेण परस्पर प्रोत्साहन मात्रेण तव
जन्माभूत्॥ अत एतादृशी विपदनु भोक्तव्येति अत एवोदाहृतं
भगवत्पादैः सुरस्त्रियोति कारणैर्यदन्यथा स्थितास्सदा॥ दुर
न्वया सुदुःसहा विपत्तता भविष्यति॥ उभौ दुःख समापन्न वित्यनेन
शाप प्रयुक्तं शिरोवेदनमात्रं पारब्धानु भवाय भवति॥ ननु पिशाच
त्व प्रयुक्त रुधिर मदिरादि पानादि नरकसाधनमिति बोध्यं॥ ननु
यावत्कलि किमखंडं दुःखं नेत्याह॥ भविष्यतीति॥ कन्यादानस्य
कालेच वरदक्षिणमर्पति॥ किरीटं शतभारंच रत्न वज्र समाकुलं॥
वरदक्षिणा यस्य सो वरदक्षिणः॥ तं रत्न वज्रसमाकुलं शतभारं
किरीटं मह्यं अर्पति समर्पयति इति योजना यद्दीयते तस्य न्या
यार्जितस्य संकल्प देवता कर्तृ पात्रानुसंधान फलाक्षत तांबूल वर
मूल्यसम दक्षिणा मंत्र श्री तुळस्युदक धारा पूर्वकत्वे दानं सांगं भव
तीत्येतत्सर्व साधारणं॥ परं तत्र विशेषः॥ ऋण पीडा परिहारकत्वा
द्दीयमान वस्तु मूल्यादुत्तमा दक्षिणा अन्यथा ऋणापनयनायोत्त
मर्णं वैश्रवणं प्रत्याभरणमपि गच्छेदिति भावः॥ रत्नानि नव
विष्णु धर्मोत्तरे उक्तानि॥ मुक्ताफलं हिरण्यंच वैडूर्यं पद्मरागकं
पुष्परागंच गोमेदं नीलं गरुत्मतं तथा प्रवाळ युक्तानि महारत्ना
नितु नवैव हीति॥ वज्रो हीरकः तैरायुक्तं शतभारं शतभारपरि
माण परिमित शुद्ध सुवर्ण मूल्यकं॥ नानुरूमण च्वक्र चिह्न
त्वे मूल्य द्रव्य वागि कुळ द्दु॥ शतभार सुवर्ण समतोलित
मिति भ्रांति निराह॥ रत्न वज्रेत्यादिना रत्नखचिताभरण
नामुन्मान कथनस्य प्रयोजना भावादनुभव विरोधाच्च॥
तुला स्त्रियां पल शतं भारः स्याद्विंशतिस्तुलेत्यमरः॥

भ॰पु॰ उभौ दुःख समापन्नौ सत्य संकल्प शेषतः॥ भविष्यति नृप श्रेष्ठ आकाश नृप नामकः॥६॥ सतु दास्यामि मे कन्यां नाम्ना पद्मावतीं शुभां॥ कन्या दानस्य कालेतु वरदक्षिणामर्पति॥७॥ किरीटं शत भारंच रत्न वज्र समाकुलं॥ शुक्रवारेतु संप्राप्ते तत्किरीटं धराम्यहं॥८॥ किरीट धारणे काले नेत्रे मे जलपूरिते॥ घटिका षट्कमारभ्य सुखं तत्र भविष्यति॥८॥इति कालावधिं कृत्वा स्वावतार प्रयोजनं॥ इति संभाष्य राजानं तत्रास्ते भगवान्हरिः॥९॥

भारः नाल्कुमण सुवर्णादि इति लक्ष्मण भट्टः॥ अर्पति ऋर्गो प्रापणयोः णिजंतः॥ अर्त्तिह्रीति पुक्॥ णिज्लोप आर्षः॥ यद्वा अर्पयतीत्यर्पः॥ पचाद्यच्॥ समर्पण कर्ता॥ स इवाचरति अर्प
८॰ ति प्रातिपदिकाचारे क्विप्॥ आभरण समर्पण मलंकार करणांतं॥ अलंकरिष्णवो न्ये तोंडिमानादय इति भावः॥ जलपूरिते भवत इति शेषः॥ तव शिरोवेदनं त्वां परित्यज्य मां सं
मत इति भावः॥ आरभ्य जलपूरण मुपक्रम्य घटिका षट्कं कलावपि प्रति शुक्रवारं सुखं भविष्यति॥ स्वावतार प्रयोजन
माहेति शेषः॥ ततः किम भूदित्यत आह॥ इति संभाष्येति अत्रेदं बोध्यं॥ आवयोस्ताव त्सख्ये विद्यमाने मच्छाप प्रयुक्त दुःख सहनं तव नचिन्त्यं॥ आढ्योवाथ दरिद्रोवा दुःखितः सुखितोपिवा॥ निर्दोषो वा सदोषोवा वयस्यः रमापतिः॥
धनत्यागो सुखत्यागो देहत्यागोपि वापुनः॥ वयस्यार्थे वर्तते स्नेहं दृष्ट्वा तथा विधमिति वचनात्॥ किंच राज्य
ग विरक्तस्य मत्समीपे तपसीच्छा पुरासीत्॥ मत्समीपे
शिद्ध कायक्लेशस्य तपोरूपत्वात् इत्येवं संभाष्य समाधा
कटुक कार्पासं कटु शब्दः क्षारवाची तेन शिला चूर्ण कच
त् द्वौ क्षारौ गृह्येते॥ कटुकौ च कार्पासंच तेषां समाहारः॥ त्॥
औदुंबर क्षीरेण क्षतसंरोहणं कटुक कार्पासे रक्त द्रुमनिरो

भ·पु यथा तथं तथा नतिक्रम्य यथातथं ॥ अव्यय भावः ॥ यथा वें·मा·
र्थंतु यथा तथं इत्यमरः ॥ ३३॥ एतावता प्रबंधेन श्रीनिवा ९४
स एकको वल्मीकांतः क्लेशमनुभवन्नास्ते इति मंदानां प्राप्तं
निरह ॥ कौसल्येत्यादिना ॥ नायमेकाकी ॥ किंतु वल्मीकांतर
प्राकृत विमाने मुक्तब्रह्मादि सेवितो नानावतार रूपैः तत्तदवता
रोपयुक्त बंधुभिः सह परमानंदमनुभवन्नास्त इति भावः ॥
अची कृपत् ॥ इत्थं रामरूपेण क्रीडते वेंकटाचले इति शेषाकर्षी
एवं वैकुंठ रूपेणेत्युन्तरत्रापि ॥ ३८॥ पुनः पर्वत माहात्म्यं
प्रकाशयन्नुपसंहरति ॥ अरायिकाणे विकटे गिरिं गच्छेति
सद्विदः ॥ एवं वेदमयः साक्षाद्गिरींद्रः पन्नगाचलः इति ऋ
ग्वेद संहितायामष्टमाष्टके ऽष्टमाध्याये इयंमृक् श्रूयते ॥
अरायिकाणे विकटे गिरिं गच्छ सदान्वये ॥ शिरिंबिठस्य सत्व
भिस्तेभिष्ट्वा चातयामसि ॥ इति ॥ अस्य मंत्रस्य भरद्वाजः शि
रिंबिठस्य ऋषिः ॥ अलक्ष्मीघ्नं देवता ॥ अनुष्टुप् छंदः ॥
अरायीति पंचर्चस्य सूक्तस्य भरद्वाजः शिरिंबिठ ऋषिः ॥
अरायि यद्ध इत्यनयोरलक्ष्मीघ्नं देवता ॥ अनुष्टुप्छंदः इति
छंदोनुक्रमणिकोक्तेः ॥ अरायि ॥ काणे ॥ विकटे ॥ गिरिं ॥ गच्छ ॥
सदान्वेन्ये ॥ शिरिंबिठस्य ॥ सत्वभिः ॥ तेभिः ॥ त्वा ॥ चातया
मसि ॥ इति पदानि ॥ सदान्वे ॥ शिरिंबिठस्येति निघंटौ पद
परिगणनात् ॥ सत्वभिः ॥ तेभिः ॥ इत्यत्र बहुलं छंदसीत्यै
सो सो ऽभावः ॥ तेभिष्ट्वेत्यत्र युष्मत्त तक्षुष्वंतः पादमिति पाद
स्त्र मध्यस्थस्य सस्य मूर्द्धन्यः ॥ चातयामसीत्यत्रे दंतो मसीति
मस इमागमः ॥ अत्र वेद भाष्यं ॥ अरा रा. यिकाणे ॥ कात्याय
नः ॥ अदायिनि ॥ शिरिंबिठो भरद्वाजः ॥ ब्रह्मणस्पत ॥
अंत्या वैश्वदेवी ॥ जगती देवत्या वेति ॥ दुरदान शीले ॥
अदृष्णा काणे ॥ पिठांत गतिके पर्वतं गच्छ ॥ सदा शब्दका
रिणि ॥ शिरंबिठस्य मम कर्मभिः ॥ त्वां ॥ नाशयामः ॥
निरुक्तं द्रष्टव्यमिति ॥ ६॥ निरुक्तंच ॥ अदायिनि ॥ काणे
विकटे ॥ काणो विक्रांत दर्शन इत्यौपमन्यवः ॥ कणतेर्वा
र्वा स्यादनु भाव कर्मणः ॥ कणतिः शब्दानु भावे भाष्यते ऽ

भ·पु नुकणतीति मात्राणु भावात्काणो दर्शनाणु भावात्काणो विका वें·मा
टो विक्रांत गति रित्योपमन्यवः ॥ ४

अरायि काणे विकटे गिरिं गच्छेति सद्विदः ॥
एवं वेदमयः साक्षाद्गिरींद्रः पन्नगाचलः ॥ ३८ ॥

कुटते र्वास्या द्विपरीतस्य विकुटितो भवति ॥ गिरिं ॥ गच्छ ॥
सदानोनुवे शब्दकारिते ॥ शिरिंबिठस्य सत्वभिः ॥ शिरिं
ठे बिठो मेघः ॥ शीर्यते बिठे ॥ बिठमंतरिक्षं ॥ बिठं बिरीठेन
व्याख्यातं ॥ तस्य सत्वै रुदकैरिति स्यात्तैर्नैष्ट्वा चातयामो
पिवा शिरिंबिठो भरद्वाजः ॥ कालकर्णोपेतोऽलक्ष्मीः ॥
निर्नाशयां चकार ॥ तस्य सत्वैः ॥ कर्मभिरिति स्यात्तैष्ट्वा
चातयामः ॥ चातयति र्नाशने इति ॥ छ ॥ एतत्पौराणिक नि
रुक्तं च ॥ विकटे इत्यस्य वें प्राहुः सर्वपापानि कटस्त दाह
उच्यते ॥ इति ॥ सदान्वे इत्यस्य सद्विद इति ॥ शिरंबिठस्य ॥
अप्येकाक्षर साम्यान्निब्रूयादिति यास्क वचनात् ॥ शिरिं
बिठस्य शेषस्येतिवा ॥ श्री वेंकटस्येतिवा इत्यादि ॥ छ ॥
एवमादि परिशीलन वशात् ॥ श्रीनिवास प्रेरणात् ॥ विद्व
ज्जनानुग्रहाच्च ॥ मम भासमानः ॥ प्रकृतोपयोग्यर्थो
लिख्यते ॥ अरायि ॥ अदायिनि ॥ अदात्रि ॥ दरिद्रे ॥ पापे
अलक्ष्मि ॥ अमंगले ॥ मंगलं पुण्यं ॥ तद्विरुद्धममंगलं ॥
हे सर्वपाप ॥ अदन्त दोषेणे त्यादेः ॥ काणे अक्ष्णा काणा ॥
अंधे ॥ आंध्य हेतु पाप ॥ विकटे ॥ कुंठे ॥ कौण्ठ्य हेतु पाप ॥
सदान्वे ॥ गृहं गृहं यात्वा अंबा भिक्षां देहीति नित्यं पुनः
पुनः शब्दकारिणि ॥ एतदुपलक्षित सर्वपाप ॥ त्वं ॥ विकटे ॥
सर्वपाप दाहार्थं ॥ शिरिंबिठस्य ॥ श्री बिटस्य वेंकटस्य ॥ आ
वासभूतो ॥ शिरिंबिठस्य शिरस्थान स्थिताशी विषस्य शेषस्या
यः तं ॥ गिरिं ॥ गच्छ ॥ गिरिं प्रतियात्रां कुरु ॥ अथ शिरिंबिठ
स्य शेषस्य ॥ मेघस्य ॥ भरद्वाजस्य ॥ वेंकटस्य ॥ तेभिः ॥

भ·पु· सत्वभिः तत्र ॥ सामर्थ्यैः ॥ शेषस्य सत्वं स्वांतर्यामि सं वें·गा
कर्षन मुखानलेन सर्वपाप शेषण दाहानुकूलं सामर्थ्यं ॥ १
त वेंकट गिरेः शेषवदनत्वात् ॥ मेघस्य स्वांतरंगी कृत गगन
तरंगिणी जलेन पुण्य पुरुषाप्यायन रूपाप्लवनानुकूलं ॥
भरद्वाजस्य तपः ॥ वेंकटस्यात्यंतिकानिष्ट निवर्तन द्वारा
स. स्वानंद केवल्य साम्राज्य दानानुकूलं ॥ इत्येतैः सत्वभिः ॥
सदान्वे ॥ सद्भिः ॥ आ ॥ सम्यक् सद्गुणत्वेन निर्दोषत्वेन ॥
अनु ॥ तत्तद्योग्यता तारतम्य वशात् ॥ त्वा ॥ त्वां ॥ चातया
मसि ॥ नाशयामः ॥ इति ॥ स्वयोग्य मोक्षानुगुण तया वि
दतीति सदान्वे ब्रह्म ज्ञानिनो देवा वदंतीति शेषः ॥ छी ॥ अय
त्वलब्ध सर्वपापिन् ॥ दरिद्र ॥ काणे ॥ कुत्सित संसार कीलक
कीलित ॥ काण ॥ कुंठ ॥ दीनवचन ॥ पापिजीव ॥ सर्वपाप
दाहार्थं ॥ वेंकट गिरिं गच्छ यात्रां कुरु ॥ अथ वेंकटेशस्य ॥
सत्वभिः प्रपन्नाभय दानादि गुणैः ॥ त्वं । पापिनं ॥ नाशयामः ॥
त्वत्पापानि नाशयाम इति ज्ञानिनो वदंतीति भावः ॥ अत्रोपष्टं
भक लेखनस्य विस्तर भीते रूपरमः ॥ अतः साधवो मयि
दयां कुर्वंतु ॥ एवं इत्थं वेदमयः ॥ वेदाः प्राचुर्येण परम ता
त्पर्येण प्रस्तुता अस्मिन्निति वेदमयः ॥ तत्प्रकृत वचने मयट् ३६॥
वल्मीक इति ॥ वल्मीकं पुन्नपुंसकं इत्यमरः ॥ मुक्तरुद्राः
मुक्त शेषाः सर्वं तेन स्वनुष्ठितमिति ॥२२॥ श्रीशं वन्दे ॥

स्वदेहाच्छन्न वल्मीको वैकुंठादधिकोह्यभूत् ॥ सुव
र्णमुखरी नाम नदी सा विरजा नदी ॥१९॥ वैकुंठो
वेंकटगिरिः वासुदेवो रमापतिः ॥ मुक्त ब्रह्मा पक्षि
गणा मुक्तरुद्रा मृगोत्तमाः ॥२०॥ सनत्कुमार प्र
मुखा वानराद्या द्विजोत्तमाः ॥ मानुषं जन्म आसाद्य
यः पुमान्वेंकटाचलं ॥२३॥

गंतुमिच्छति धर्मिष्टः सर्वं तेन स्वर्नुष्ठितं ॥२१॥
श्री वेंकटाद्रेस्तु महामहात्मतां जानंति ते ब्रह्म
शिवेंद्र पूर्वकाः ॥ किमल्प वीर्या मनुजास्तमोनुगा
जानंति विष्णोः स्थळ मद्भुतंच ॥२२॥

इति श्रीमद्भविष्योत्तर पुराणे वेंकटगिरि माहात्म्ये
४ ॥ छी॥

श्रीमद्भविष्योत्तर पुराण व्याख्याने श्रीमत्कल्याणकांड दीपे
गिरींद्रात्मक प्रदीप प्रभाकरणं नाम चतुर्थोध्यायः संपूर्णम्॥
श्रीकृष्णार्पणमस्तु ॥

श्री श्रीनिवासाय मंगळं ॥ गतिश्चंद्र श्चकोराणां चात
कानां बलाहकः॥ वासुदेवो भवार्तानां॥ अस्माकं चिकिद्दि
र्गतिः॥३॥ पंचमे व्याख्येयानि व्याक्रियंते॥ श्रुतं श्रीवेंक
टेशस्य माहात्म्यं पापनाशनं ॥ अवतार प्रभावश्च चोळ
राज निबंधनं॥ मुकुटागमनं देव चरितं लौकिकं परं॥ इ
त्यादि अवतार प्रभावो वतार माहात्म्यं चोळराज निबंधनं
मि स्थिति गति नियमः मकुटागमनमित्यादि देवचरितं देव
दुर्लभं चारित्रं भवद्भिरुक्तं॥ अस्माभिश्च श्रुतं॥ इदानींतु
सकल्याण विधिं पद्मा विवाह विधान सहितं॥ केवलं लौ
किकं यस्मिन्काले तथा देश इत्यादि स्वसंकल्पितं प्राकृत
मानुषच स्वाध्याय प्रवचने चेत्युपनिषत्॥ मानुष संभव च्चा
रित्र्य प्रचुरं चरित्रं ब्रूहि इत्यंत योजना॥ अयं भावः॥लौकिका
अलौकिके व्यापारे अकुशलाः अलौकिकाश्च लौकिके अयं चा
त्य लौकिकः ईदृशस्य श्रीनिवासस्य केवलं मानुष प्राकृत
चरच्चरित्रं तवमुखाच्छ्रुत्वा स्मारं स्मारं नंदयामः॥

भ.पु अलौकिकं देवचरितं बहुषः श्रुतं ॥ अलौकिकस्य लौकिकत्वं वें.मा· पूर्वमिति अवश्यं श्रोतव्यं इतः पूर्वावतार रामकृष्णादि रूपेपि मानुष व्यापारो दर्शितः ॥ ततोपि नूतनोयमवतारः॥ किमत्र लौकिक व्यापारे नूतनमिति ॥ ३॥ ६

हरिः ॐ ऋषय ऊचुः

सूत सूत महा भाग सर्व शास्त्र विशारद ॥ श्रुतं श्री वेंकटेशस्य माहात्म्यं पापनाशनं ॥१॥ अवतार प्रभावंच चोळराज निबंधनं ॥ मुकुटा गमनं देव चरितं लौकिकं परं ॥ २॥ कृपाळोसि दयासार शिष्यप्रीति परायण ॥ सकल्याण विधिं ब्रूहि कोवाकाश नृपोन्तमः॥३॥ कथं पुत्री भवत्पूर्वं कथं जामातृ तां गतः ॥ तन्तथा ब्रूहि भगवन्सांग वैवाहिकं शुभं ॥४॥ यः पुमान्वेंकटेशस्य महिमा क्षीर सागरे ॥ स्नानाचार परो नित्यं स धन्यः पुण्य वर्धनः ॥५॥ एवं निशम्य ऋषिभिः भाषितं वचनं शुभं ॥ सभासदैः साधुगुणान्वदद्भिः तुतो नितांतं निज शिष्य संघान् ॥ उवाच भक्त्याकित नम्र देहः सा ध्वी सुसा ध्वीति सहाश्रु हर्षः ॥६॥ सूतः ॥ श्रुण्वंतु मुनयः सर्वे भक्ति भावेन संयुताः ॥ पन्नगाचल नाथस्य कन्या संग्रहणं शुभं ॥७॥ कदाचिद्वेंकटेशस्तु औषधार्थं स्वयं हरिः ॥ गमनाभि मुखो भूत्वा प्रवज्राजारुणोदये ॥८॥ तस्मिन्काले वराहस्तु मृगयार्थं ससूकरः ॥ यदागतस्तदादेवं ददृशे वेंकटेश्वरं ॥ ९॥

कथं पुत्री भवदिति ॥ अडभाव आर्षः ॥ कथं जामातृतां गतः श्रीनिवास इति शेषः ॥ सहाश्रु हर्षः ॥ अश्रु आनंदजं नेत्रांबु हर्षो रोमांचः ताभ्यां सह वर्तत इति तथा ॥

भ·पु· सा ध्वी सुसा ध्वीति पृच्छेति शेषः॥ कोवाकारा नृपोत्तमः॥ वें·म॥ ९
इति सा ध्वी॥ तदुन्तरा सुसा ध्वीति विवेकः॥ गमनाभि मुखो
भूत्वा प्रवव्राजारुह्योद्ये॥ वल्मीकाद्बहिर्निर्गमनाभि मुखो भूत्वे
त्यर्थः॥ एतावंतं कालं बहिर्गमने वै मुख्यं प्रयोजनाभावात्॥
इदानीं त्वाभिमुख्यमभू त्पुरतः कार्यगौरवादिति भावः॥
मृगयार्थं॥ शामाकहारि वृषभासुर मृगयार्थी॥९॥ गर्जतः॥
कोसि कोसी तीति॥ त्वं कोसि कोसीति गर्जनं कुर्वंतः॥ तत्र
वृक्ष गहने मृग दर्शने लुब्धकानां अंतर्धानं स्वभाव इति भा
वः॥ ततु॥ भयात्॥ प्रत्युत ते एव सूकराः प्रदुद्रुवुः॥
लीनंत मित्यादि बुद्धिमानित्यं तमेकं वाक्यं॥ लीनंतं वेंकटं
दृष्ट्वा॥ यद्यप्ययं महाटवी कदु किरात इव भाति तथाप्य
यं निरायुध इति बुद्धिमान्वराह वदनो हरिः मृगोपि धैर्यमा
लंब्य वचन मुवाचेत्यन्वयः॥ श्रीनिवासोप्युवाचेत्य ध्या
हार्यं॥ संभाषण समय उभाभ्यां जगद्विडंबनाय प्रदर्शितं
सात्विकं भावमाह॥ अन्योन्ये त्यादिना॥ श्रीनिवासेन स्वदुःख
निवेदने कृते तस्यापि दुःखं संजातं॥ अत अन्योन्य दुःख
ल·पु संदिग्ध लोचनौ अश्रुपूर्णौ भवत इत्यर्थः।लुटः टिक्कर
णाल्लोचन शब्दः पुमान् साक्षान्नारायणांशौ रूप द्वंद्व विरा
जितौ॥ अवतार द्वय शोभितौ॥ उभौ कोल वेंकटौ कलौ विडंब
नं दर्शयंतौ॥ भाषणं सल्लापं ऊचतुः॥

गर्जतः कोसि कोसीति सूकराः तत्रचाययुः॥ तान्दृष्ट्वा जग
दीशस्तु तत्रलीनो भवद्धरिः॥३०॥ लीनंतं वेंकटं दृष्ट्वा
वराहवदनो हरिः॥ उवाच वचनं देवो धैर्यमालंब्य बुद्धि
मान्॥ ३१॥ अन्योन्य दुःख संदिग्ध लोचनावश्रुपूरितौ॥
कलौ नारायणौ साक्षाद्रूप द्वंद्व विराजितौ॥३२॥ ऊचतु
र्भाषणं चोभौ दर्शयंतौ विडंबनं॥ तयोस्तद्भुतं कर्म
दृष्ट्वा ब्रह्म पुरोगमाः॥३३॥ ववृषुः पुष्प वर्षाणि क्रोड
नारायणोपरि॥ यथा युगं यथा देशं यथाकालं यथावयः॥३४॥

पु

तथावतार माकां क्ष न्रमते रमया सह ॥ एवं वदंतः सुर – वेंमा-ह
पुंगवास्ते विचित्रमायां जगदीश चेष्टितां ॥ हसंतऊचुः
स्य परमस्य विष्णोः रनंत शैलस्य रमापतेश्च ॥३९॥

तदां विजयांकुर पूजकाः ब्रह्मादयः श्रीनिवास विजयकाले
पुष्पाणि ववृषुः इत्याह ॥ तयोरित्यादि ॥ अनंत शैलस्य
श्रीनिवासस्य रमापतेर्वराहस्य च ॥ जगदीश चेष्टितां जग
दीश स्वभावाचार युक्तां ॥ विचित्र मायां अद्भुत दुर्जन व्या
मोहन कार्यानुकृतिं प्रतिहसंतः संतः यथायुग मित्यादि
सहेत्यं तमेवं वदंतो यथा यथं जग्मुरिति शेषः ॥३९॥ सं
भाषण मभिलप्य दर्शयति ॥ त्यक्त्वेत्यादिना ॥ भृगोरंघ्रि प्र
पाताच्च रमा कोल्लापुरं गता (ययौ) ॥ अत्रेदं बोध्यं ॥ तथा
हि स्कांदे ॥ तथाहि देवासुरमभूद्युद्धं पूर्णमब्द शतं पुरा ॥
वृत्रेऽसुराणामधिपो देवानांच पुरंदरो ॥ अत्र देवै महाबी
र्यैर्नारायण बलाश्रयात् ॥ असुरा निर्जिता सर्वे पाताळ
तळमाययुः ॥ केचिल्लंका गताः ॥ केचिद्वरुणालयं ॥
केचिद्गिरि व्रजं ॥ तत्र कोल्लासुरो नाम असुराणां महा
बलः ॥ गोमंतं दुर्गमं दुर्गं गिरिमाश्रित्य निर्भयः ॥
या राजकन्यका लोके रूपवत्यो महागुणाः ॥ आनी
य गिरि दुर्गस्थो रमयामास सर्वशः ॥ एतस्मिन्नेव
काले तु आगतौ मुनिसत्तमौ ॥ अगस्त्यो गौतमश्च
तदा राजानः कोल्लासुर कृतामार्तिं निवेदयामासुः ॥
तदागस्त्यः कोल्लासुर कृतार्ति निवृत्यै महालक्ष्मीं
प्रपन्नास्तेत्याह ॥ ते तथा चक्रुः ॥ तदा महालक्ष्मी
मां ययाचे ॥ तदा विष्णुना मया हे महालक्ष्मी स्त्वं
गत्वा तं हत्वा ता राजकन्या मोचयेत्यनुज्ञाता ॥
एतस्मिन्नेव काले भृगुणा स्वभार्या मया निषूदिते

भा-पु: त्यति शोकेन तपसो ऽतिरेकात् ॥ अविगर्णां-च्चांघ्रि वेगं॥ प्रहारो जात इति च ॥ नकेवलं कोल्हासुर संहारानि 9
मित्ता दूषितु भृगोः पादताडन न्याजा-च्चरमा कोल्हा पुरं ययौ ॥ आकारांतः कोल्हा शब्दः कोल्हः पः पुरं वा ——— रिलप्रत्ययः ॥ यद्वा कोल्हेऽस्या मस्तीति कोल्हा सा च सापुरश्चा तत्तथा ॥ अर्शं आद्यच ॥ टाप् अप्रत्ययः ॥ अ-च्छामिच निरंतरं ॥ अस्मिल्लेव दिन इति न किंतु-त्तरम्मापि निरंतरं ॥ दैवे दृष्ट मार्गेण अदृष्ट प्रदर्शित मार्गेणेत्यर्थः ॥ तव दर्शनेनानेन मम कष्टं पृष्टतः॥ इत उत्तरं सर्वं सुखोदर्कं भविष्यति ॥

त्यक्त्वा वैकुंठ लोकंतु किमर्थं त्वमिहागतः ॥ तद्वदस्व महाभाग श्रीनिवास वरानन ॥३५॥ इतितेन समाज्ञप्त अवदत्कोलरूपिणी ॥ भृगोरंघ्रि पपाता-च्च रमाकोल्हापुरं ययौ ॥३६॥ तेन दुःखेन संतप्तः त्यक्त्वा वैकुंठ मुत्तमं ॥ इहागतो रमाकांत वल्मीके तव दक्षिणे॥ निवसंतं च मां देव धेनुपालोह्य ताडयत् ॥ कुठारेणासि धारेण तत्क्षतं मां तु बांधते ॥३९॥ अोषधार्थं वराहात्म ना-च्छा मिच निरंतरं ॥ दैवेन दृष्टमार्गेण त्वां दृष्टोऽस्मि धराधर॥ अत्रैव निवसामीति संकल्पो मम वर्तते ॥स्थऊं देहवली कांत यावत्कलि युगं भवेत् ॥४१॥

विजय मगत वेत्ताथों तव दर्शनेन शुभ सूचनात् ॥ अत्रैव निवसामीति संकल्पो मम वर्तते ॥ सएप यथष्यस्ति सं कल्प स्तथापि ॥ अहं पुराणे भृगरूपी ॥ त्वं चार्जात्चीनो मलाटवी कदु किरातः ॥ अहं स्तब्धः ॥ त्वं च चतुरः ॥ कपट मानुषः ॥ अंगुली प्रदर्शने हस्ते गिलतीति गिरा कथ्यमानः कथमावयोः समावेशः संभवतीति चेच्छृणु ॥ जीवता यावज्जीवं न्याय्यं वर्तनीयं ॥ अहं च न्यायं वर्ते इति मम संकल्पः ॥

भ·पु· एवं सति तव का चिंतेति चेत्॥ मास्तु मम चिंता॥ तर्हि वें·मा·
अन्यदीयस्थान स्वाम्यन्यस्य तव कथं प्राप्नोति दानेन ६
विक्रयेण वा नो भयथा॥ अहं ब्राह्मणः॥ त्वं बाहुजः प्रति
ग्रहो नदान पात्रं परिक्रयणेच द्रव्य नास्ति कथं न्याये
स्थ न स्थलं प्राप्तिरित्यत आह॥ स्थलं देह्यवनीकांत याव
कलि युगं भवेत् इति॥ मास्तु दानं विक्रयोवा किंतु भोग्या
धीना यावत्कलियुगं देहीति भावः॥ इदंतु न्याय्यं भवति॥२३॥
इति तेनेति समाज्ञप्तः सम्यगावेद्यमानः। द्रव्यं मे दीयता
मिति आधिमूल्यं द्रव्यं दत्वा गृह्णामि भावः॥ द्रव्यं ताव
द्विविधं सिद्धं साध्यं चेति॥ सिद्धं धनिनां ममतु साध्यं। तथा
हि॥ तव समीपे जगद्रक्षणार्थं वसतो मम सेवार्थं जनाय
दिष्यंति तदा कर द्रव्य मेष्यति तदा तद्दीयते इत्येतावन्मात्रो
क्तौ तत्सर्वं दीयत इत्यन्यथा गृह्णीयादित्यतः॥ परिगणनं
कृत्वा इदमेव वरं द्रव्यं इत उत्तरं किंचिन्नास्तीत्याह॥ इतिवा
क्यं इति॥ आधिमूल्यं द्रव्यं नपर्याप्त मित्यतो विनयेन
सांत्वयति॥ करुणानिध इति॥ पाद शतमात्र मिति॥ पद
शतं परिमाणमस्य तत्तथा॥ तादृशं चतुरश्रं स्थलमिति
शेषः॥२४॥ एतस्मिन्नवसरे श्रोतृणां मा शंका जाता नथाहि॥
यद्यपि भवंतः सत्यवचसः तथापि निरवधिकानंतानवद्य
ज्ञानानंद बलैश्वर्य स्वातंत्र्याद्यात्मक कल्याण गुणस्य हरेर
ज्ञान दुःखसाद दारिद्र्या स्वातंत्र्या पादक मतव्यरित्रं मृषेति
भाति तत्कथमुच्यते भवद्भिरेव मित्यत आह॥ मोहनार्थमिति॥
मोहनार्थ मिति अविवेकोत्पत्तये॥ तदारभ्येति॥ अत्रेदं ज्ञा
तव्यं॥ वराह स्वामिना तीर्थ भूमौ स्थाने दत्ते तत्स्थानाभि
मानिनी बकुला श्रीनिवास सदेशं गत्वा दर्शनं कृत्वा स्व
वृत्तिं विज्ञापयामास॥ अहं तीर्थ भूम्याभि मानी॥ अस्यां
तीर्थ भूमौ पाद शत मात्रं स्थानं तुभ्यं वराह स्वामिनादत्तं॥
अतः त्वमपि धर्मतो मम स्वामी अभूः॥ अतः तव दर्शना
र्थं अहमागता॥ तव किं कार्यस्मीति अथ श्रीनिवास उवाच॥
त्वं कया वृत्या वराह समीपे वर्तस इति॥

भ-पु. वें-मा ९६.

इति तेन समाहृप्तो वराह वदनो हरिः ॥ उवाच वचनं देवं द्रव्यं
मे दीयतां प्रभो ॥२२॥ इति वाक्यं ततः श्रुत्वा उवाच मधु
रं वचः ॥ प्रथमं दर्शनं तीर्थं नैवेद्यं क्षीरसेचनं ॥२३॥
इदमेव वरं द्रव्यं ददामि करुणा निधे ॥ तदा ददौ हरिः
पाद शत मात्रं रमापतेः ॥२४॥ मोहनार्थं त्वय भक्तानां
भक्तानां भक्ति सिद्धये ॥ एवं हि क्रीडते तत्र वेंकटे
प वेंकटेश्वरः ॥२५॥ तदारभ्य धराकांतो बकुलां पाकू
कारिणीं ॥ अर्पयामास देवाय सेवार्थं तां धरापतिः ॥२६॥
भोजनार्थं रमेशस्य श्यामा काव्नं निरंतरं ॥ समधु
प्रेषयत्य धात्र्या बकुळ मालया ॥२७॥ सा बाला सेवन
रता श्रीनिवासस्य सन्निधौ ॥ अन्नपानौष धाद्यैश्च
पादसं हननादिभिः ॥२८॥ पूजयामास गोविंदं श्रीनि
वासं निरामयं ॥ ऋषयः ॥ श्रुतं सूत महा भाग देवाग
मन मुत्तमं ॥२९॥ वराह दर्शनं तस्य वासो वैकुंठ भू
धरे ॥ बकुळा सेवका चोक्ता सा का पूर्वं वदस्व नः ॥३०॥
पुरा यशोदा बकुळा कृष्णस्य जननी मुने ॥ अदृष्टा
नंत रूपस्य कृष्णस्य तनयस्य च ॥३१॥ कल्याणादि
महा पुण्यं सा त्यजन्ते न हेतुना ॥ कळे वरं तु कल्याणि
यशोदा नंत वल्लभा ॥३२॥ तस्याः प्रीत्ये वासु देव
अष्टा विंशति मे कलौ ॥ स्वावतार गुणै श्चापि यशोदा
परि तोषके ॥३३॥

अहं च पाके सेवायां च कुशला ॥ अतः सेवावृत्या वर्ते इति
तत् श्रुत्वा श्रीनिवासः अहो मयि महान्देवानुग्रहः ॥
पंगूपरि गंगा प्रवाह इव कल्याणी बत गाथेयं लौकिकी
प्रति भाति मा ॥ ऐति जीवंत मानंदो नरं वर्ष शतादपीति स्व
यं संहृष्यो वाच बकुळां ॥ त्वदभि मन्यमाने स्थाने दत्ते त्वम
पि दत्तैव ॥ अतः इतः परं न्यायत्वान्म त्सेवया वर्तस्व ॥

भ·पु· अन्यथा स्यजाभिमानं गच्छेत्॥ किं चापन्नानां संपन्नो वें·गा· ९
गतिः॥ वराहः संपन्नः॥ अतः मद्गृहे न्याये त्वया वि
ज्ञापिते सोपि त्वां दास्यत्येव॥ अथ तद्वृत्तांत मावेद्य अनु
ज्ञा मादायेतः परं मत्सेवां कुर्वित्याह॥ अथ तद्वृत्तांत नि
वेदने वराहः कपट मानुषोयं॥ हस्त ग्रास न्य सविष
३ य इति पूर्वमेव ज्ञातं तथैव जातं इति मत्वा तां ददावि
ति॥ बकुला सेवका चेत्यादि अमव दित्यंतस्य भावार्थः॥
कल्याणादि महापुण्य साध्य मदृष्ट्वा तेन हेतुना त
च्चिंतया कलेवर मत्यजत्॥ इति॥

॥क्रीडन्नास्ते जगद्योनि निर्दोषोपीश्वरोपि सन्॥३३॥
दैत्यानां वंचनायैव सुराणां मुक्तिकारणात्॥ स्व
भक्तानां हितायैव विरक्तानां विशेषतः॥३४॥ मुक्ति
मापादयन्देवो धरते प्राकृताकृतिं॥ इत्येवं कारणा
देव यशोदा बकुला भवत्॥३५॥ सा करिष्यति क
ल्याणं हरेर्वैकुंठ वासिनः॥ किमलभ्यं हरौ तुष्टे
ज्ञान विज्ञान संपदां॥३६॥ केचिद्देवं पूजयन्ति।क
श्चिद्देवेन पूज्यते॥ हनुमता पूजितोपि स्वयमन्यं न
मर्चति॥३७॥

न तद्विरुद्धं व्यवहारेण बकुला संपादनं॥ एकस्मिन्व्यवहारा
भावात्॥ किं च किं करीत्वं मातृत्वं॥ अपि चै तादृशाज्ञाना
स्वातंत्र्यापादक चारित्र्य कथनमपि भवतामति साहस मि
त्यत आह॥ जगद्योनि रित्यादिना जडे रित्यंतेन॥ दैत्यानां
ये वंचनायैव तमः प्राप्यस्य॥ अविरक्तानां स्वभक्तानां हिताय
नीति मार्गाय कला वेव मिति॥ अनिषिद्ध सुख त्यागी पशुरेवे
त्यादि न्यायात्॥ न्याय प्राप्तं न परित्यजेत्॥ अन्यथा न
वर्तेति भावः॥ किंचयश्चैवं मातृ मात्र रक्षिणः समातृ दत्ता

भ·पु· न्न पानोष धा भ्यंगादि भिः पालितो जीवन् बलिष्टः पश्चा वें·मा·
न्मातरं परिचरेदिति नीति सूचनात् ॥ कारणा दिदं सेवकत्वं न ९९·
मातृत्व विरुद्धमित्यर्थः ॥ विरक्तानां ज्ञानिनां विशेषतो मुक्तिमा
पादयन् मुक्तावानंद वृद्धिं कुर्वन् प्राकृताकृतिं धरते ॥ दोष प्रमुष्ट
दृष्टीनां प्राकृत रूपवद्रूपं प्रकाशयतीत्यर्थः ॥ इत्येवं कारणात् स्व
योग्य न्यून साधन पूर्ति स्वकृत पूर्व महा सुकृत फल भोग स्वयोग्य
तातिरेकि पुण्य समीकरणा त्कारणात् ॥ द्रोणा नामक वसोः पत्नी
धरा नाम्नी तीर्थ भूरूपा पाचकी तस्या रूपद्वयं यशोदा बकुळा
चेति नपुराणांतर विरोधः ॥ कुतस्तस्या स्तादृशं सामर्थ्यं इत्य
थ आह ॥ किमलभ्य मित्यादिना ॥ परम पुरुषार्थ सा साधन
ज्ञान विज्ञान संपदां दातरि प्रभौ हरौ तुष्टे किमलभ्य मिति भावः॥
किं सर्वेषां देव स्वभावानां स्वयोग्यताति रेकि सुकृत समीकर
णं समानं किं न्नेत्याह ॥ केचिदित्यादिना स्वयोग्यतातिरेके
ण साधनमनु तिष्टंतो देवपूजका महांत इति सूचनाय बहु
वचनं ॥ स्वयोग्यतातिरेकेण साधनमनु तिष्टंतः तरा इति
सूचनायैकवचनं तत्पूजक पूज्यौ दर्शयति ॥ हनूमतेति ॥
आंजनेयस्तु हनुमा न्हनूमा न्मारुतात्मजः इत्यमर शेषः अर्च
ति अर्चयति ॥३८॥ हरेः क्रीडा दुर्निरूप्येत्याह ॥ केन्वितिनु
वितर्के नु पृच्छायां वितर्के चेत्यमरः ॥ संदेह विमर्शादि जन्यो
नेकधा संभावनात्मा भ्रूविक्षेप शिरः कंपाद्यनु भावो वितर्कः॥
संदेहात्कल्पना नंत्यं वितर्कस्तर्कितो बुधैरिति तल्लक्षणात्॥
तस्य कल्याण गुणे र्व्यामोहा न्मम मनस्तत्र लग्नं ॥ अन्यदानं
त्यादिकं नगणितं ॥ मम मास्तु किं वा भवतु ॥ ब्रह्मा शेषो
वा वर्णेत् ॥ वर्णयेत् ॥ णिज भाव आर्षः ॥ तदभि धान
मपि न संभव तेषामपि येदं इयत्त तये दृक्कया वा दुरवग
मत्वेन व्यामोहांता संभवात् इति ॥ अपि चेत्यादि तृतीयं
चोद्यं परिहरति ॥ नित्य शुद्धस्येत्यादिना जडैरित्यं तेन
न्य· वै निश्चयेन ॥ नित्य शुद्धस्य निरंजनस्य विष्णोः अन्यस्यापि॥
अज्ञान पारतंत्र्या द्याभासक स्यापि चारित्र्यस्य वेदने किं
किं भयमस्माकं किमपि भयं नास्तीत्यर्थः ॥

कृते पुण्यं ऋषीणांतु अकृते दोष संग्रहः॥ तस्मा
त्पूज्यः सुरैः यद्वै ऋषिभिस्तत्व कोविदैः॥ पितृभि
र्भूमिपै र्विप्रैः र्मागधै राक्षसै र्जडैः॥३९॥ कलौ
कलुष चिन्तानां पापाचार परात्मनां॥ रक्षणार्थं
रमाकांतो रमते प्राकृतो यथा॥४०॥

प्रस्तुत दैत्यमोहनाय स्वेच्छया कृत चारित्र्य वेदने नं हरेस्तोष एवेत्याह॥ कृत इति॥ अन्यसापि वेदने कृते ऋषीणां पुण्यं तत्समीहित करणात्॥ अकृते दोष संग्रहः दैत्यानां मोहजननात्॥ जडैरज्ञैः॥ नन्वाप्त कामस्य हरेः प्रजा पीडनं करदानं तीर्थ नैवेद्यादि विक्रयणमित्यादि प्राकृता चरणं कथं संगच्छत इत्यत आह॥ कलाविति॥ कलिकाल कृत कालुष्य दोषेण मोहित चिन्तानां॥ अत एव पापा चरणासक्त मनसां॥ स्वभाव शुद्धानां स्वभक्तानां॥ रक्षणार्थं राजवत्कर दान पूर्वक प्रजापालनं भवान्भगवान्करोत्विति प्रार्थितः सन्लक्ष्मी वरदानात्कलि दोष प्रयुक्त रोग दारिद्र्यादि उपद्रवेभ्यो नित्यं पालनार्थं रमाकांतः प्राकृतः पुरुषो यथा उपकृत उपकरोति तथा रमते॥ द्रव्य दानादिकं करोति॥ यथा भिषक् द्रव्यमादायौषधं दत्वा रोगं कृणोति तथा द्रव्यमाकृष्य स्वार्जन उपयुज्य पापं प्रशाम्य रक्षतीत्यर्थः॥ पीडा हेतुः कलि कालुष्यं रक्षकः श्रीनिवास इति बोध्यं॥४०॥ तस्मिन्निमित्त रौप्य पीठपुर स्थित श्रीकृष्णवत् किं नस्यादित आह॥ दैत्यानामित्यादिना बालक इत्यंतेन जगद्रक्षणार्थमवतीर्णत्वात्तस्यावर्जनीय सन्निधितया मुख्यतः प्राप्तत्वादिति भावः॥ श्रीकृष्णस्य चानंद तीर्थार्यजननासिद्ध्युचितात्वादि दत्वा सिद्धि विघ्न मुख दोष भैषज्य दानोकदीक्षत्वेन तस्याप्रसक्ते रूपांतरेण सिद्धत्वाच्च बालः स्वेच्छाविडंबि

भ्र·पु नां शान्ति धर्म:॥ बालकैः प्राकृतैः क्रीडते क्रीडया मोहयती वें·मा
त्यर्थः दैत्यानां वराह श्रीनिवासौ महाभूत इति मोहः॥ देवा ९
नामादि नारायणं शाविति सम्प्रत्ययं॥ यद्वा बकुलाया
पूजकत्वं पूज्यत्वं चावस्था भेदेन संभवतीत्याह॥ क्रीडते
इत्यादिना मूर्तिमानित्यंतेन बालः बालरूपी बालकैः प्राकृ
तैः बकुलादिभिः निमित्तैः क्रीडते॥ बाललीलां करोति॥
कथं तस्य बालरूपत्वं संघटत इत्यत आह॥ जगदिति॥
जगति ये बालकाः तेषां सर्वेषां बालकः बालचेष्टा प्रदर्शकः
किं तस्य तच्चित्रमिति भावः तादृशं सामर्थ्यं तस्यास्ती
त्येतेनैवाह॥ जगदित्यादिना यतः जगत् बालको यस्य
विरिंचस्य स तया स बालको यस्य जगद्बालक बालकः
श्रीनिवासः तस्मान्नतच्चित्रमिति भावः॥ तथाच बाल्येन
सेव्यत इति भावः॥४१॥

दैत्यानां मोहनार्थाय सुराणांच विनोदतः॥ क्रीडते बालकैः
बालो जगद्बालक बालकः॥४१॥ जगन्मोहन सौंदर्य लीला
मानुषमूर्तिमान्॥ नकृतं देवसंघैश्च नकृतं विश्वकर्मणा॥४२॥

पुनः कालविशेषतां बहुमानेन तोषयतीत्याह॥ जगन्मोहनेत्यादिना॥
तर्हि तस्य रूपं कीदृशं कती सः तश्चिदानंदात्मक मनंत मित्या
ह॥ नकृतमित्यादिना विराजित इत्यंतेन दैवसंघैः देवसंघश्च
देवसंघाश्च देवसंघाः तैः॥ देवसंघः तत्व देवसंघः तेन
कृतं मानुषं नेत्यर्थः॥ देवसंघैः ब्रह्मपुरोग शंभुपुरोगेंद्रपुरो
ग देवसंघैः॥ क्रियमाण ध्यानेन कृतं नतैः क्रियमाण ध्यान
काले चिन्ते यत्प्रतिबिंबितं वासनामया परनामक मनोमयं
सनकादीनां रूपवन्नेत्यर्थः॥ विश्वकर्मणा देववर्धकिना कृतं
शैलं लौहं दार्वं लेख्यं लेप्यं सैकतं मणिमयंच नेत्यर्थः॥४२॥
तर्हि दृगित्याह॥ इच्छारूपेति॥ यदा बाल्ये इच्छा तदा बाल

भ॰पु॰ रूपं गृहीत्वा इच्छया अनन्याधीनतया क्रीडते ॥ बाललीलां ॥ वें॰मा॰

र्य. यदा तारुण्ये तदा तद्रूपं प्रदर्श्य पद्मा परिणयनादिना बकुला ६.

दीन्तोषयतीति ॥ यदा अर्चा विग्रहेच्छा तदा तद्रूपं गृहीत्वार्चां

स्वीकरोति ॥ इतीच्छारूपं चिदानंदाद्यात्मक मनंत मिति भावः ॥

कथं तर्हि शिलामयं रूपं इदानीं सर्वैर्दृश्यत इत्यत्र बहूनि पुरा

ण वचनानि लेख्यानि संति ॥ तानिच ग्रंथ समाप्तौ सत्यां लेख

नीयानि भवंति ॥ सुकृतं फलं लभ्यत इति किं वक्तव्यमित्य

र्थः ॥ ॐ श्रीमद्भविष्योत्तर पुराणे श्री वेंकट गिरि माहा

त्म्य व्याख्याने कल्याण कांड दीपे श्रीनिवास हयंगवीन

स्य वराह कर्तृक वल्मीक पात्र प्रतिष्टा नाम

संपूर्णः श्री कृष्णार्पणमस्तु ॥ ॥ ६१ ॥ ६१ ॥

स्वेच्छया क्रीडते तत्र इच्छारूप विराजितः ॥
क्षेत्रस्य महिमा दिव्या तथा तीर्थस्य वैभवः ॥
तत्र साक्षाद्रमाकांतः किं तत्र सुकृतं फलं ॥
बहुजन्मार्जितैः पुण्यैः लभ्यते क्षेत्र दर्शनं ॥
तत्रापि वेंकटगिरेर्दर्शनं मुक्तिदं परं ॥ ४५ ॥

इति श्री भविष्योत्तर पुराणे वेंकटगिरि माहात्म्ये

पंचमोऽध्यायः ॥ [redacted] ॥

 ॥ श्रीगुरुभ्यो नमः ॥ श्रीवेंकटेशमनिशं श्रीनिवासं महीपतिं ॥ श्रीब्रह्मेश सुरश्रीदं तं वन्दे चन्द्रसन्मुखं ॥ १ ॥ अस्मिन्नष्टेऽध्याये व्याख्येयानि व्याक्रियंते ॥ श्रीसूतः ॥ सकदाचिद्रमेशस्तु चिंतयामास वै हयं ॥ मनसा चिंत्यमाने च हयः प्रत्यक्षतां गतः ॥ सः श्रीनिवासः कदाचित् एकस्मिन्दिवसे प्रातः ॥ शयने शयान एव ॥ हयं उच्चैश्श्रवसं । तथा च श्रूयते हयो भूत्वा देवानवहत् वाजी गंधर्वानित्यादि ॥ हत्वायाति यतः शत्रून्हयस्तस्मादिति स्मृतिः ॥ चिंतयामास ॥ हयमित्युपलक्षणं ॥ ऐरावतं ॥ निषादपरिवाराय देवांश्च ॥ सस्मारेत्यर्थः ॥ मनसा चिंत्यमाने स्मर्यमाणे भावलक्षणा सप्तमी हयः प्रत्यक्षतां गतः ॥ अक्ष्णोः प्रति आभिमुख्यं प्रत्यक्षं ॥ लक्षणेनाभि प्रतीति समासः ॥ प्रतिपारीत्यादिना टच् ॥ चाक्षुषज्ञानं तदस्यास्तीति प्रत्यक्षः ॥ अर्श आद्यच् ॥ तस्य भावस्तत्तातां गतो भूदिति शेषः ॥ यद्वा क्षिणि प्रति अभिमुखः प्रत्यक्षं तस्य भावस्तत्तेति बहुव्रीह्यर्थे च्व्यभावः ॥ प्रतिगतो क्षं प्रत्यक्ष इति प्रादिसमासो वा ॥ १ ॥ हयेपरि समास्थाय सर्वाभरणभूषितः ॥ 

श्रीनिवासाय नमः

> श्रीसूतः ॥ सकदाचिद्रमेशस्तु चिंतयामास वै हयं ॥ मनसा चिंत्यमाने च हयः प्रत्यक्षतां गतः ॥ १ ॥ हयोपरि समास्थाय सर्वाभरणभूषितः ॥ कांचीं बध्वा रमाकांतः कांचीदाम विराजितः ॥ २ ॥ शुभ्रवस्त्रं हस्तपंच दशमात्रं नवेपरि ॥

हयस्योपरि हयोपरीति विग्रहः ॥ अकृदव्ययत्वान्नपूरणेत्यादिना निषेधः ॥ हयोपरि हयपृष्ठे ॥ समास्थाय अंतर्भावितणिजर्थः ॥ आस्था पानीयानि पल्ययानादि सोपधानसनानि आस्थाप्य ॥ अथ स्वयं सर्वाभरणभूषितोऽभूदिति शेषः ॥ एते एव क्रमेण विशदयति ॥ कांचीं बध्वेति ॥ अश्वमध्यबंधनकक्षां बध्वा स्वयं कांचीविराजितः ॥ अथवा सर्वाभरणभूषितः ॥

भ·पु· हयोपरि समास्थाय मृगयां गत इत्यर्थः॥ एते एव विशे वें·मा
दयति कांचीत्यादिना॥ ॥हयस्य हय प्रत्यक्षस्य उपरि ६
अनंतरं॥ तदुपरीत्यत्रे वोपरी त्यस्य कालार्थत्वात्॥समा
स्थाय॥ आङ्‌ड्रमे॥ शयनो त्थितः॥ स्थित्वा॥जगन्मो
हन सौंदर्य लीला मानुष विग्रह रूपे च्छारूप विराजितः॥
सर्वाभरण भूषितः॥ आबध्यो रोप्य विक्षेप्य बंधनी येश्च
तुर्वि धैराभरणै र्भूषितो भूदिति शेषः॥ एतदेव विशदय
ति॥ कांचीमिति॥ द्वादश हस्ता नाहावित स्ति परिणा हावी
रक क्षात्र कांची पट्टीति यावत्॥ धट्टीत्यप भ्रष्ट भाषायां॥
स्वेच्छा निर्मित स्वर्नमय पटीं गुह्य बंधनात्मक कौपीन
कटिसूत्रौ भयात्मिकां वीर कांचीं कटि बलशं कटिदेशे ब
ध्वेत्यर्थः॥ पीतकक्षासु संवीत कटिदेशं सुमध्यम मिति
वराह पुराण समाख्यानात्॥ कक्षापटीच कौपीनं शाटी
बस्ती ति लक्ष्यत इत्यमरः॥ कंच्यते कट्यां बध्यते वीरैरिति
योगेनवा कांचीवीर कौपीनं॥ कचि काचि दीप्ति बंधनयो रिति
धातुः॥ अथवा॥ कांचीति तत्स्थानं कटिर्लक्ष्यते॥ तथाचकटिं
बध्वेत्यर्थः॥ तदपि वीर कौपीने नैव॥ कांची दाम विराजितः॥
एकयष्टि र्भवेत्कांची मेखला सप्त यष्टिका॥ रशना षोडशहेया
कलापो विंशति स्तथेति॥ स्वर्नतंतु निर्मितैक यष्टि कट्या भरणं
च्य कांचीत्युच्यते॥ सैव मुख पट्टयुक्तं शृंखलितं कीलितं वादाम॥
तथाच कांची चादः दामच कांचीदाम तेन विराजितः॥ आबध्य
शोभित इत्यर्थः॥ अथवा कांचीं बध्वा तेन विराजित इत्यर्थः॥
इदमाबाध्य माभरणं॥२॥ शुभ्र वस्त्रं हस्त पंच दशमात्रं नवो
परि इति॥ पंचच दशच पंचदश संख्या या अल्पी यस्याः इति
पूर्ववत्वं पंचाधिका दशपंच दशेतिवा हस्तानां पंचदश हस्तपंच
दश हस्तपंचदश प्रमाणमस्य हस्त पंचदश मात्रं॥ पंचदश चतै
हस्ताश्चेतिवा कडारादित्वं कल्पनीयं॥ नवोपरि नवभ्यो हस्ते
भ्य उपरि तथाच स्वर्नरजत कौशेय कार्पास बहुर्ण तंतुमय
पाळि दशा शालि नवोपरि पंचदश संख्याहति संपन्न चुर्विं
शति स्वहस्त प्रमाणं पयः फेन निभं शुभ्रवस्त्रं वस्त्रयुग्मं

भ.पु. स्वेच्छया निर्माय तत्रैकं परिधाय परमाकुंचितं वामस्कंधे वें.मा
परि संवीय भूषितो भूदिति भावः ॥ इदमाबा ध्यारोप्यो भयरूपं ॥ ६
ननु शुभ्रवस्त्रं चतुर्विंशद्धस्त मात्रं नवं शुभमित्यादि सुगम
संदर्भे संभवति एवं संदर्भ वैचित्र्यस्य प्रयोजनं तु हस्त
पंच दश मात्रं ॥ हस्त प्रमाण परिच्छिन्न पंच संख्याक पाळि
घटिका कच्छक परिधान पर्याप्तं परि धानीय मेकं ॥ शुभ्र
वस्त्रं उपरि उपरितन मा च्छादनं ॥ शुभ्रवस्त्रं नवसंख्याकां
चल घटिकोपेत मित्यर्थ विशेषावगतिः दशाश्च दशाश्च
दशाश्च इतिपाळि घटिका कच्छार्थानां प्रमाणां सरूपैकशे
षः ॥ पंचचता दशाश्च पंचदशाः हस्ताः पंचदश यस्य
परिधानकर्मण स्तद्धस्त पंचदशं तस्य मात्रं पर्याप्तमिति
अर्थात्प्रकरणाल्लिंगादेश्चित्याद्दिर्थ निर्णयः नातः पद
पदार्थ विग्रह वाक्यार्थ क्लेशः ॥ परि धानस्य पंच कच्छक
त्वात्परि धानं यस्य हस्त पंचदश मात्रत्वं ब्रह्मांड जातीय शरीरा
वरणस्यापि नवत्वौचित्या न्नवत्वं ।
{= पूर्वकच्छं सुरावासं पृष्टकच्छं तवासुरं ॥ = च्छं पृष्टतः प्रोक्तं
त्रिकच्छं पुरतस्तथा ॥ पंचक ~परिधाना चले कध:
द्विक वाससी धौते ह्यच्छिन्ने परिधायवै ॥ च्छं भवेदेव मन्यथा
नग्न उच्यते ॥ स्नात्वेवं इत्याश्वलायन याज्ञवल्क्यौ = }
दश्या नाना विधा वस्था व त्यौर्वस्त्रां चलेपि चेति निघंटुः संदर्भ
शुद्धावभियोग युक्तं मनोमदीयं सुकिरात रूढं अतो मया
कल्पित मेतमर्थं नंदंतु विंदंतु नमे विषादः ॥ पूगीफलं
सतांबूलं चूर्ण निक्षिप्त पात्रकं ॥ आदर्शं मृत्तिकां शुभ्रां तथा
वै कुंकुमं शुचि ॥ एवं निर्मित वस्त्रेण बध्वातु कटि मध्यतः ॥
सतांबूलं धवळ पर्णी पर्णबद्धवळ तांबूल वल्ली दळपूर्ण
पेटीसहितं ॥ पूगीफलं निष्टप्त सुवर्ण रजत कर्दमा
लिप्तैला तंडुल देवकुसुम जाती फल तत्पत्र पूगीफल शक
ल एतादृश पूग चूर्ण गुळिकादि समुद्गकमेकं चूर्ण निक्षि
प्त पात्रकं ॥ निक्षिप्तं चूर्णं मुक्ताचूर्णं यस्मिन्तत् चूर्ण
निक्षिप्तं ॥ अगन्याहित वत्समासः ॥ तच्च तत् पात्रंच चूर्ण

भ.पु.|| निक्षिप्त पात्रं तदेव तर्कं ॥ सुवर्ण शृंखलित खजा शलाक वें. मा
सहितं ॥ स्वर्नमय माम्र फलाकारं संपुटक मित्येकं ॥ आदर्शं ६
स्वर्न बिल निक्षिप्तं दर्पणं ॥ तथा शुभ्रां मृत्तिकां तत्पात्रीं
एकां ॥ तथा शुचि कुंकुमं शुचि शुद्धं कुंकुमं वस्त्र गालित
घुसृण संपुट मेकं एवं एवमादि कस्तूरी संपुटं ॥

पूगीफलं सतांबूलं चूर्ण निक्षिप्त पात्रकं ॥ आदर्शं
मृत्तिकां शुभ्रां तथावै कुंकुमं शुचि ॥ एवं निर्मि
त वस्त्रेण बध्वातु कटिमध्यतः ॥ ४ ॥ स्वर्ण यज्ञो
पवीतांगः कंठाभरण भूषितः ॥ कंकणांकित
दोर्भ्यां वै संपूर्ण वर गात्रकः ॥ ५ ॥ कुंकुमाक्त सु
गंधेन लिप्तांग कर राजितः ॥ कबरीकृत केशे
षु रक्त वस्त्रं सुवेष्ट्यच ॥ वासंतैः पुष्प जालै
श्च स्कंधगैः परिभूषितः ॥ एवं मनोहरं रूपं
धृत्वा श्री वेंकटेश्वरः ॥ ६ ॥

घनसार संपुटं ॥ स्वर्नकूर्चं एवमादयेक पेट्यां निक्षिप्य
निर्मित वस्त्रेण स्वेच्छा निर्मित कौशेय वस्त्रेण ॥ पृष्टे कटि
मध्यतः ॥ तट्टं बध्वा तदेतद्धं धतं द्राविड देशा चार प्राप्तं
कंठाभरण भूषितः ग्रैवेय कललंतिं कुपालं बिकाद्या भरण
भूषितः इदमारोप्यं भूषणं ॥ कंकणांकित दोर्भ्यां ॥ रत्नख
चित स्वर्नमय वलय शृंखल केयूरांगुलीय कालं कृत बा
हुभ्यां पर्याप्तोन्तम विग्रहः ॥ आजानु बाहुरिति यावत् ॥
विक्षेप्यं भूषण मिदं ॥ कुंकुमाक्त सुगंधेन लिप्तांग कर रा
जितः ॥ कुंकुम केसर गंधेना रक्त सुगंधेना लिप्तमध्य देह
कराभ्यां प्रकाशितः ॥ रक्त वस्त्रं अरुण कौशेयं ॥ वासंतैः
पुष्प जालैः ॥ नाग पुन्नाग बकुळाशोक चंपका मल्लिका
दि पुष्प माला दिभिः परिभूषितः ॥ पद्मराग मणि ज्यो

भ॰पु॰ तिः स्फुरत्कुंडल मंडितः॥ एवं मनोहरं यद्वा वल्गा मनो वें॰मा
हरं॥८॥ हय रत्न समाकीर्णं॥ मुख देशे पृष्ठ देशे च
सर्वतः॥ रत्न खचित सर्वाभरण भूषितं॥ उपनद्ह विभू
षितं उप बध्यते उपवव ध्र्यते ऽ पृष्ठो ऽ नेने त्युप बर्हः॥ उप
धानं उप उप गर्भितं बर्हः मयूर पिच्छं यस्मिन्स उप
बर्ह इति वा॥ तूल स्थानीय पिच्छ गर्भित महा धनवस्त्र
प्रियका जिनादि निर्मिताश्च पृष्ठासाद्या सना लंकृतं सुवर्ण
लतिका युक्तं॥ सुवर्ण लतायमान कविका नामक मुख बंधन रज्जु
नियंत्रितं॥ वायु वेगं मनोजवं प्रत्यागच्छ प्रति घातक स्पर्श वा
ड द्रव्य प्रवाहो वेगः॥ अप्रति घातक स्पर्श रहित द्रव्याति गमनं
जवः॥ यद्वा वेगो ऽति धावनं॥ जवस्त्वति वेग इति वा॥ वायो
र्वेग इव वेगो यस्य स तथा॥ मनसो जव इव त्वरितमिव त्व
रितं यस्य स तथा॥ एता दृशं हयमास्थाय आरुह्येति ल
भ्यते॥ बाण बाणा सन धरः निषाद रूपै र्देवैः परिवृतः
सन्॥ रवि वारे क्षेम पुनर्वसौ ध्वजयोगे गिरि श्रेष्ट मवरुह्य
मृगयार्थं जगामेत्यर्थः॥ मृगया मेवाह॥ मृगानित्या दिना॥
देवो विपिने इतस्ततः॥ संचरन् धावन्॥ सिंह शार्दूल जंबु
कान् मातंगान् घोरान् शरभान् तथावै तथैव महिषानपी
त्येवं बहुविधान् नानाकारान् दैत्यान् जघानेत्यर्थः॥ ३०॥

हय रत्न समाकीर्णं उपबर्ह विभूषितं॥ सुवर्ण (लति) का
युक्तं वायुवेग मनो जवं॥ ८॥ अवरुह्य गिरि श्रेष्ठं मृगया
र्थं जगाम सः॥ मृगान्बहु विधाकारान् सिंह शार्दूल
खड्गकान्॥ ९॥ मातंगान्शरभान्घोरान्तथा वै महिषान
पि॥ जघान विपिने देवः संचरंस्तु इतस्ततः॥ ३०॥ तत्रैकं
हस्ति राजानं मदमत्तं वनेचरं॥ तं हंतु मगम त्पृष्ठ मनु
सृत्य रमापतिः॥ स जगाम वने दूरं भयाद्भीतो वृषाकपेः॥
योजनं सार्धकं गत्वा तत्र देवं जनार्दनं॥ ३२॥ दंडवत्पतितो भू
त्वा शुंडामु द्धृत्य गर्जयन्॥ यदा गतस्त दा कन्या दृष्टिमार्ग
मुपागता॥ ३२॥

भ·पु॥ हरिरहं गजत्रातेति पद्मावत्याः सूचयितुं तत्कृत व्यापारांतर वें·मा
माह ॥ तत्रैक मित्यादिना गत इत्यंतेन ॥ हस्ति राजानं ऐरावत ६
श्रीनिवासेच्छा मात्रेणो च्चैः श्रवो वदागतः ॥ समासांत विधे
रनित्यत्वाद्गजराजमिति साधु ॥ वनेचरमिति ॥ हलदंतादित्य
लुक् ॥ तं हंतुं हंतुमिव वृषाकपे र्भया द्भीतः सगजः वने दूरं
जगाम दुधाव ॥ धावना वधिमाह ॥ योजनमिति ॥ सार्धकं
योजनं गत्वा तत्र सार्ध योजनांते पद्मा समक्षं देवं जनार्दनं
प्रति दंडवत्पतितो भूत्वा शुंडामुद्यम्य गर्जयन् स्पष्ट प्रतिपत्त्य
र्थं हरे त्राहि त्राहीति अर्थ सूचित (सूचक) बृंहितं कुर्वन्
पद्मया देवं जनार्दनं गत्वा गमयित्वा मुक्तो वनं गतः॥ तदा
श्रीनिवासस्य कन्या दृष्टिमार्गमुपागता ॥१३॥ सा कन्या कस्य
संबंधात् किमर्थं वनमागता ॥ कस्यैव तनया सर्वं तद्वदस्व
महामते ॥ सा श्रीनिवास दृष्टा ॥ कन्या कनति दीप्त्या प्रका
शते पतिमिच्छतीति चेति कन्या ॥ कनी दीप्त्यादिषु ॥
ऋ॰ कस्य निक्षेपस्य वारुणस्य वा वैरस्य वा सुकृता देर्वा संबधा
त् भूमावुत्पन्ना किमर्थं किं निमित्तं कस्यैव कस्य वा अन
वकॢप्तौ वा संधिरार्षः ॥ यस्य कस्य वा तनया स्वित्यर्थः॥
तज्जिज्ञासा नावरयकीति भावः ॥ चंद्र वंशो नृपः कश्चि
त्सुवीर इति नामकः जज्ञे ॥ तत्पुत्रः सुवीरपुत्रः सुधर्म इति
नामतः ॥ जज्ञे ॥ तत्सुतौ सुधर्म सुतौ ॥ आकाश तोंडिमानौ
नामतः जतौ ॥ ज्येष्ठो नंत नृपः ॥ साधुरेव हरितद्भक्तारा
धक एव ॥ न दुष्टशिक्षणादि प्रजा शासने ॥ तर्हि कः शास्तेत्यत
आह ॥ कनिष्ठ इति ॥ दधिखंड मिवा भवत् ॥ सर्वांशेनोपादेय
मभूत् ॥ कदाचित्पुत्र दुःखेन एकांत भवने स्थितः ॥ अपुत्रो नृपति
र्दृष्ट्वा गुरुं चोवाच भक्तितः ॥ कदाचित् स्थिते ख शिष्टापकाले
पुत्र दुःखेन पुत्र संबंधि दुःखेन ॥ संबंधश्च तत्प्रति योगिक वि
रह प्रयुक्तत्वं पुत्र विरह प्रयुक्त दुःखेनेत्यर्थः ॥ तदा तद्दुःख
शांतये यदृच्छया प्राप्तं गुरुं दृष्ट्वा ॥ नाना दानं कृतमिति ॥ पुत्र
प्राप्ति हेतुभूत डोलस्थ सुवर्ण बालकृष्ण प्रतिमा दानं वृषभ
दानं विप्रोद्वाहनं ॥ सवत्स सुवर्ण धेनु दानं ॥ घृत कुंभ दानं॥

भ·पु॥ विधिवत्सं याव पायस दानं ॥ कूष्मांड दानं ॥ दीपदान मित्यादि वं·मा
अनेक दानं कृतं ॥ तीर्थ यात्रा विशेषतः ॥ भूशुद्धि स्थानीय
तत्प्रतिबंधक निवृत्यर्थ मेकवारं ॥ अतिशयार्थ मेक वारमिति
विशेषतः॥ गंगा सेत्वादि यात्रा कृता ॥२४॥

॥ऋषयः॥ साकन्या कस्य संबंधा किमर्थं वनमागता॥कस्यैव तनया सर्वं तद्वदस्व महामते ॥१४॥ इति तैस्तु समाज्ञप्तः सूतः परम धार्मिकः॥ उवाच वचनं भक्त्या संतोषोद्रिक्तमानसः॥१५॥ सूतः॥ शृण्वंतु ऋषयः सर्वे कन्यायाजन्म पावनं॥ पुरातु द्वापरस्यांते पांडवानां महात्मनाम्॥१६॥ युद्धे तु भारते ऽतीते अष्टाविंशति मे कलौ॥ विक्रमार्कादयो भूपाः स्वर्गलोकं यदा ययुः॥१८॥ तत्कालांते वत्सराणि सहस्राणि समागमन्॥ चन्द्रवंशो नृपः कश्चित्सुवीर इति नामकः॥१८॥ जज्ञे सुधर्मस्तत्पुत्रस्तत्सुतौ नृपपुंगवौ॥ आकाश तोंडिमानौ तौ जातौ लोक यशस्करौ॥१९॥ धर्मिष्ठौ दृढ भक्तौ तौ नारायण परायणौ॥ जेष्ठानंतनृपःसाधुः कनिष्ठः तोंडमानिति॥२०॥ तोंडि देशाधिपो भूत्वा शशास पृथिवी मिमां॥ तस्मिन्शासति भूखंडं दधिखंड मिवा भवत्॥२१॥ निरातंकं भवत्सर्वं जगत्स्थावर जंगमं॥ गावो बहुपयोदाश्च नार्यः पतिपरायणाः॥ कदाचित्पुत्र दुःखेन एकांत भवने स्थितः॥अपुत्रो नृपतिः दृष्ट्वा गुरुं चोवाच भक्तितः॥२३॥ आकाशः॥ अनुभूत मिदं राज्यं हस्त्यश्व रथ संकुलं॥ नानादानं कृतं तात तीर्थयात्रा विशेषतः॥२४॥ नानुभूतं पुत्रसुखं पितृणां मुक्तिदं द्विज॥

नानुभूतं पुत्रसुखं ॥ पितृणां मुक्तिदं द्विज ॥ पितृणां मुक्तिदं॥ अमृतत्व प्रदं ॥ पुत्रस्य पितृणां ऋणान्मुक्तिदं वा ॥

भ·पु·। नयाच मन्त्रवर्णः ॥ ऋणमस्मिन्संनयति अमृतत्वंच गच्छति॥ वें·मा
पिता पुत्रस्य जातस्य पश्येच्चे जीवतो मुखं इति ॥ श्रुतिश्च ॥ ६
जायमानो वै ब्राह्मणस्त्रिभी ऋणवान् जायते ॥ ब्रह्मचर्येण
ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः य एवा अनृणो यः
पुत्री यज्वा ब्रह्मचारी वासी दिति ॥ पुत्रसुखं पुत्रसंतानत्रायते
फलदं दैवमेव जानातीति भावः तथाऽपि सामान्यतो ज्ञायते
इत्याह ॥ कस्येत्यादिना ॥ हे विप्रेंद्र कस्य वा राज्ञः सुतो मारितः॥
तेन पापेन पुत्रजन्मच चोऽप्यर्थे जन्मापि नप्रप्तं इत्यर्थः॥
ग यद्यपि विशेषतो नज्ञायते तथापि यतोमया पुत्रजन्मापि न
श्रूयते ॥ अतो राजपुत्र मारणात्मकं दुष्कर्मानुमीयत इति भावः॥
बंधि सुखानुभवकारणं पुत्रजन्म ॥ नानुभूतं नदृष्टं ॥ किं प्र
वासात्सर्वथा भावाद्वेत्यतोऽभवदित्युक्ते सोपि कुत इत्यतो
बहुकालं पुत्रजन्मानुफलं भ प्रयुक्त दुःखानुभवेपि अक्षय्य
बलवद्दुष्कर्मणा इति प्राप्ते तदपि किमित्युक्ते वितर्कयति ॥
किं मया चरितं पापमित्यादिना ॥ किं वितर्के मया आचरितं॥
बलवत्कृतं पापं ॥ पुत्रजन्मप्रतिबंधक गुरुद्वेषादि वत्सवियो
जनांत दृश पापमध्ये किमिति भमा विशेष ॥ इतः परं राजा
पुत्रार्थं नास्त्येवै सुखमिति लालप्यते ॥ नेत्राभ्या मित्यादिना
क्रूरं वा नरकं गुरो इत्यंतेन ॥ अथ तादृस्मिन्जीवलोके केचन
पुत्रसुखानुभव कारणीभूत सुकृतस्यांशांश भागिनः॥१॥
केचनैकांश भाजः॥२॥ केचिद्भाग द्वय भाजनाति ॥३॥ केचि
त्रिभाग भाजः ॥ ४॥ केचिद्भोगकाल संकोचक पूर्णसुकृतिनः॥५॥
केचिच्च महांतो बहुकालं यथामतः सप्रिय पुत्र सुखानुभवे
प्यक्षय्य सुकृतशालिनः॥६॥ एवं षड्विध सुकृतेष्वयमेक इति
ताहं गणनीयोऽस्मीति परिशेषयितुं तावद्यद्यमेक इति ना
हं गणनीय इति निषेधति ॥ नेत्राभ्यामित्यादिना प्रतरम्यह
मित्यंतेन न दृष्टमिति यद्यपि लक्षणैरनुमितं तद्वैः श्रुतं ज्यो
तिषा दर्शने नदृष्टं ज्योतिषकैः श्रुतं तथापि नेत्राभ्यां नदृष्टं क
र्णाभ्यां नश्रुतं इति कर्णपदाभ्यां व्यज्यते ॥ मुखपंकज मिव
मुखपंकजं ॥ अनेन जीवतो मुखमिति लभ्यते ॥

किं मया चरितं पापं कस्य वामारितः सुतः ॥२५॥ तेनपापेन विप्रेंद्र नप्राप्तं पुत्रजन्मच ॥ नेत्राभ्यां नैव दृष्टंच पुत्रस्य मुख पंकजं ॥२६॥ कर्णाभ्यां नश्रुतः शब्दः पुत्रेण रूदितस्तथा ॥ भवतां पितृबंधूनां दुर्गतिश्च भवेत्तदा ॥२७॥

ऋणमस्मि सन्नयतीति मंत्रवर्णात् ॥ अहं तस्य नांशांश सुकृती तत्कार्यं जीवत्पुत्र मुख दर्शनाद्य भावादित्युक्तं भवति ॥ सम नियतयो र्भावा भावयो रविना भावः ॥ सुस्थ एव ॥ अंशांश भागिनां पुत्रमुख पंकज दर्शन तद्रुदित शब्द श्रवण जातकर्म नामा° दोलारोहण ७ दुग्धपान ७ जलपूजन मासे ? निष्क्रमण ४ भूम्युप वेशन ५ अन्नप्राशनादि ८ वर्धापनांत मंशांशतत्सुकृत कार्य भूतं सुखकारणं ॥ तवैकस्य पुत्रसुखं नानुभूतमिति एतावता किं महा हानिर भूदित्याशंक्य तत्र आह ॥ भवता मित्यादिना । एवमिति यदेति च शेषः ॥ पितृबंधूनां पितरश्च बंधवश्च पितृबंधवः पितॄणां बंधवः पितृबांधवः तेचते च तथा तथाच यदास्माकं कुंठित शक्तिता तत्रैवं अपुत्री भूय विद्यमानानां अस्माकं पितॄणां बंधूनांच पितृबंधूनां भवतां गुरूणांच जन्म वियोप पदे भयवंशापादि तैह्य लौकिक पार लौकिक पाथेया भावेने हामुत्र च ॥ दुर्गति र्दारिद्र्यं सुख दारिद्र्यं भवेदिति योजना ॥ एवं के जानंतीत्यत आह ॥ अपुत्रस्येत्यादिना गतिः ऐह्या मुत्रकी ॥ नापुत्रस्य लोकोस्तीति वेदार्थ ज्ञा जानंतीत्यर्थः ॥ मत्समागमात् ॥ अन्न प्राशनांग विष्ण्वादि पूजनार्थं मत्सान्निध्यात् पुत्रेणकर्ता ॥ रुग्म पात्रेण करणेन अन्नप्राशनाख्यं सुखं न दृष्टमिति यावत् ॥२७॥ प्राशितान्न पुत्रोंऽके कृत्वा लालनीयः ॥ तन्नमया कृतमित्याह ॥ मदंके त्यादिना ॥ किंचाहं भ्रांत इत्याह ॥ भूषणानीत्यादिनां ॥ ततः प्रागेवेति शेषः यत्नतः अनर्घ्य रत्न संपादन प्रयासेन कृत्वा कारितमित्वा ॥

अपुत्रस्य गतिर्नास्ति इति वेद विदो विदुः ॥ पुत्रेण रुग्म
पात्रेण नभुक्तं मत्समागमत् ॥२८॥ मदंक कृत दोषेण
नमया लालितः सुतः ॥ भूषणानि ततः कृत्वा पुत्रार्थं
यत्नतो मया ॥२९॥ तोषं प्राप्तो नमे जातः पुत्रः पितृहि
ते रतः ॥ सुतार्थं कवचं कृत्वा इत एहीनि नोदितं ॥३०॥
पुत्र हीनं च मां दृष्ट्वा कर्षंति यम किंकराः ॥ गच्छराज
न्त्वरेणैव यमस्य भवनं प्रति ॥३१॥ पाशकुंठित सर्वांगः
किमुवक्ष्याम्यहं पुत्रवान् ॥ लिखितं चित्रगुप्ताभ्यां अपु
त्रत्वं महामते ॥३२॥ मद्गर्भ जातपुत्रेण मार्जनं तु कदा भवेत् ॥

तथाच ततः पुत्रोत्पत्तेः प्रागेव पुत्रार्थं ॥ पुत्रालंकारार्थं ॥ यत्नतः ॥
भूषणानि कृत्वा तानि दृष्ट्वा तोषं प्राप्तोऽभूवं ॥ एतादृशा भ्रांतस्य मे
पितृहिते रतः पुत्रः प्रिय पुत्रः ॥ इदानीमपि नजातः प्रिय पुत्र ल
क्षणं पद्म पुराणे पाताळ कांडे ॥ अथातः संप्रवक्ष्यामि यस्मात्पुत्रं
भवेत्प्रियं ॥ जातत्रः प्रियं कुर्याद्बाल्ये क्रीडन गायनैः ॥ वयः प्राप्य
प्रियं कुर्यान्माता पित्रोरनंतरं ॥ भक्त्या संतोषयेन्नित्यं तावुभौ परि
तोषयेत् ॥ स्नेहेन वचसा चैव प्रियसंभाषणेनच ॥ इत्यादि ॥ जिह्वा
कृतदोषमाह ॥ सुतार्थमिति ॥ कृत्वा कारयित्वा ॥ ननु मस्त्वेकं पुत्र
सुखं न सर्वे सर्वसुखिनः इत्यतो महद्दुःखमाह ॥ पुत्रहीनमिति ॥
यः त्वर्थे मृतमात्रं निष्करुणा यमकिंकरा गळे पाशान्क्षिप्त्वा
कर्षंति ॥ च ॥ पुत्रहीनं तु मां दृष्ट्वा ॥ गच्छराजन् त्वरेणैव यमस्य
भवनं प्रतीत्युक्त्वा कर्षंती किमुवक्तव्य मित्यर्थः ॥ पाशकुंठित
सर्वांगः ॥ कथं शीघ्रं गच्छामि ॥ अपुत्रवान् किमु समाधानं व
क्ष्यामि ॥ यम किंकराणां विस्मृतिः किं नस्यादित्यत आह ॥
लिखित मिति ॥ कालतो मार्जनं किं नस्यादित्यत आह ॥ मार्ज
नं त्विति ॥ तु कदेति काकुः ॥ चित्रलिखित मार्जनं तु कदा भवेत् ॥
कस्य कालस्य भवेत् ॥ नकदापीति भावः ॥ किं तर्हि सर्वथा नभव
तीत्यत आह मद्गर्भेति ॥ भवेच्चेन्मार्जनं ॥ मद्गर्भ जात पुत्रेण भवेत् ॥

भ·पु· तादृशं सुकृतं कुत्रास्ती भावः ॥ रेतः सिग्मो गोथ ततो रेतः सिन वैं·मा
मेवानु प्रविशति ॥ अथ मातरं अथ प्रसूयते इति श्रुति सूत्राभ्यां
पुत्रस्य पुंगर्भजातत्व संभवात् ॥ किंकराः किंवा कुर्वंतु गुणग्रही
यमः त्वां पुरस्थितं धार्मिकं दृष्ट्वा सांत्वयति संभाययति चेत्यत आह ॥
दुराचारेति ॥ दुराचारेति दुर्बुद्धेति अपुत्रेति यमेन भाषितं परि
भाषितं वचनं श्रुत्वा ॥ कः पुमान् तत्पुरतः स्थातुं उत्सहेत् सम
र्थो भवेत् ॥ नष्टदीपः नष्टसंतानः ॥ अतिनिष्ठुरः अति परुषितः ॥
कष्टोद्भूत कळेवरः कष्टा यद्‌ुः स्वानुभवाय उद्भूतं उत्पन्नं कळे
वरं यस्य स तथा ॥ वृथाजातः सुधर्म वंशे उदासीनः पुत्र इति
यावत् ॥ अति पापात्मा पापिष्ट मनाः आत्मनः स्वस्य नरकाव
ष्कृ हः नरक प्रापकः दुष्कृतानुभवाय नरकं प्रवेवेक्ष्मि ॥ यमस्य
पुरतः स्थातुं का शक्तिरिति भावः ॥ उदासीन पुत्र लक्षणं तु
तत्रैव पाद्मे ॥ उदासीनं प्रवक्ष्यामि तवाग्रे प्रिय सांप्रतं ॥

दुराचारेति दुर्बुद्धेऽपुत्रेतिच यमेनच ॥२३॥ भाषितं वचनं श्रुत्वा
कः पुमान् स्थातु मुत्सहेत् ॥ नष्टदीपोति निष्टूरः कष्टोद्भूत
कळेवरः ॥२४॥ वृथाजातोति पापात्मा आत्मनो नरकावहः ॥
तंतु हीनं कुलंचापि अतीरं कूपमंगतं ॥२५॥ भर्तृहीनां
यथा लोके निंदंति जनमंडलाः ॥

उदासीनेन भावेन सदैव परिवर्तते ॥ न ददाति न गृह्णाति नच
कुप्यति तुष्यति नोपप्रयाति संत्यज्य ह्युदासीनो द्विजोन्त
मेति ॥ मास्तु पारलौकिकं सुखं मास्तु चैहलौकिकं पुत्रसुखं
त्वन्तावत्स्वमे धीत्यत आह ॥ तंतु हीनमिति ॥ यथा लोके
जनमंडलाः सम्हित जनाः ॥ भर्तृहीनां अंगनां प्रशस्तांग
योगिनीं श्रुत्वा अविस्मृत्य कार्यांतरं शतमपि परित्यज्य ताम
न्विष्य त्यक्तचिंतामपि गुडजिह्विकान्यायेन चिंतां शोकंचो
॥द्बुध्य त्वं पुरा गौरीव दृश्यसे दृशकालं तव भर्ता जीवेच्चेत्सुखं ययात् ॥

भ·पु अदृष्ट हीनो राँडेय इत्यादि पर्यवसाय निंदंति ॥ तथा यथा बहु द्रव्यादि न्ययायासेन खनितं कूपमनीरं श्रुत्वा खानयितारं प्र त्यागत्यां धुगुणानुक्त्वा स्वां धोनीर मात्रं ययाच्चे द्वहु जनः सुखं यायात् ॥ इत्यादि निंदंति ॥ इयं च निंदात्व मदृष्ट हीनो रंडा पुत्र इत्यादि पर्यवसायिनी ॥ तथा तंतु हीनं कुलं चापि ॥ त्यक्त चिंतमपि मामन्विष्य कुलगुणानुवाद पूर्वकं चिंतामुद्भु धीयो द्धु ध्यैव सर्व संपत्समृद्धस्यास्य कुलस्य तंतुमात्रं तंतुश्चे किमु वक्तव्य मित्यादि निंदंति ॥ इयंच निंदात्वं पुत्र हीनः पापीत्यादि पर्यवसायिनी तथान्य मन्तावतो तुं भविष्यामीति भावनायामपि जंना नत्यजंति ॥ कथं तूष्णीं कामास्से इति भावः ॥ अस्तिचैवं लोकरीतिः ॥ कथमन्यथा पापिना मन्यत्र पापसंक्रांतिः स्यादिति भावः ॥ जनाः तावत् निंदंतु नंदंतु वा ॥ तावता तव किं भवि ष्यतीत्यत्र आह ॥ किं करोमि ॥ हे भूदेव इह भूलोके क्व गच्छा मि ॥ किं करोमि किं विषं पास्यामि ॥ किमु द्वंधन वाक्षिपापि ॥ पुरतो मम का गतिः ॥ दुःख शांत्यै कः पंथा इत्याधिर्जनिष्यते इहामुत्र फल भोग विरक्तस्सन् भवाब्धिं प्रतरेत्यत आह ॥ कं देवमिति ॥ कं देवं शिवं वा ब्रह्माणं वा विष्णुं वा शरणं गत्वा भवा ब्धिं संसार दुःख सागरं प्रतरामि प्रतरणोपाय भूत तादृश भवदुपा सनायाः कालोऽतीत इति भावः ॥ उपक्रांत मनुसरन् द्वितीयेऽपि तथा निषेधं कुर्वन् एकांश तत्सुकृत फलीभूतं सुखकारणं निषेध यति ॥ रुदंतं पुत्रमालोक्य प्रेम्णा वाचा शमय्य तं इत्यादिना मही पतिरित्यंतेन रुदंतं पुत्रमालोक्य प्रेम्णा स्नेहेनोपलक्षित या वाचा ॥ तं रुदंतं ~~पुत्रमालोक्य~~ शमय्य ॐ हुलुलुवामीति बालरोदन शामक यंत्र शास्त्रोक्त बीज मंत्रेण शांत रोदनं कृत्वा सांत्वयित्वेति यावत् मा रुदस्वेति नोदितं तथा रुदंतं पुत्रमालोक्य आत्मसतीं मृषा विनिंद्य ॥ मूढे पंडित मानिनि. काले काले कर्तव्या चतुरे ॥ मंद गमने इत्यादि मृषा परिभाष्य आशु पुत्रं पयः पायय ॥ आशय नोचेत्वां ताडयामि इति आहन्मीति आत्म सतीं प्रतिनो दितं ॥ २८ ॥ रुदंतं पुत्रमित्यत्रोन्तरत्राप्यनुषज्यते ॥ घंटां चेति ॥ रुदंतं पुत्र मालोक्य घंटां प्रतिमां । अर्घ्यं फलंच कंदुकं चते ॥

(Margin, right: दे. मा ६.)
(Margin, left: त)

भा·पु· तादृशं सुकृतं कुत्रास्ती भावः ॥ रेतः सिग्धा गोथ ततो रेतः सिच वैं·मा
मेवान् प्रविशति ॥ अथ मातरं अथ प्रस्यते इति श्रुति सूत्राभ्यां ९६
पुत्रस्य पुं गर्भ जातत्व संभवात् ॥ किंकराः किंवा कुर्वंतु गुणग्रही
यमः त्वां पुरस्थितं धार्मिकं दृष्ट्वा सांत्वयति संभायति चेत्यत आह ॥
दुराचारेति ॥ दुराचारेति दुर्बुद्धेति अपुत्रेति यमेन भाषितं परि
भाषितं वचनं श्रुत्वा ॥ कः पुमान् तत्पुरतः स्थातुं उत्सहेत् सम
र्थो भवेत् ॥ नष्टदीपः नष्टसंतानः ॥ अतिनिष्ठुरः अति परुषितः ॥
कष्टोद्भूत कळेवरः कष्टा यदुः स्वानुभवाय उद्भूतं उत्पन्नं कळे
वरं यस्य स तथा ॥ वृथाजातः सुधर्म वंशे उदासीनः पुत्र इति
यावत् ॥ अति पापात्मा पापिष्ट मनाः आत्मनः स्वस्य नरकाव
ष्कृ हः नरक प्रापकः दुष्कृतानुभवाय नरकं प्रत्येवैमि ॥ यमस्य
पुरतः स्थातुं का शक्तिरिति भावः ॥ उदासीन पुत्र लक्षणं तु
तत्रैव पाद्मे ॥ उदासीनं प्रवक्ष्यामि तवाग्रे प्रिय सांप्रतं ॥

दुराचारेति दुर्बुद्धे ऽपुत्रेतिच यमेनच ॥ ३३ ॥ भाषितं वचनं श्रुत्वा
कः पुमान् स्थातु मुत्सहेत् ॥ नष्टदीपोति निष्ठूरः कष्टोद्भूत
कळेवरः ॥ ३४ ॥ वृथाजातोति पापात्मा आत्मनो नरका वहः ॥
तंतु हीनं कुलंचापि अनीरं कूपमंगतं ॥ ३५ ॥ भर्तृ हीनां
यथालोके निंदंति जन मंडलाः ॥

उदासीनेन भावेन सदैव परिवर्तते ॥ न ददाति न गृह्णाति नच
कुप्यति तुष्यति नोपप्रयाति संत्यज्य ह्यु दासीनो द्विजोन्त
मेति ॥ मास्तु पारलौकिकं सुखं मास्तु चैहलौकिकं पुत्रसुखं
त्वन्तावत्तस्त्वमेधीत्यत आह ॥ तंतुहीनमिति ॥ यथा लोके
जनमंडलाः समूहितजनाः ॥ भर्तृहीनां अंगनां प्रशस्तांग
योगिनीं श्रुत्वा अविस्मृत्य कार्यांतरं शतमपि परित्यज्य ताम
न्विष्य त्यक्त चिंतामपि गुडजिह्विका न्यायेन चिंतां शोकं चो
द्बुध्य त्वं पुरा गौरीव दृश्यसे दृशकाल तव भर्ता जीवेच्चेत्सुखं ययात् ॥

भ·पु। अदृष्ट हीनो रांडेय इत्यादि पर्यवसाय निंदंति ॥ तथा यथा बहु देवं मा
द्रव्यादि व्ययायासेन खनितं कूपमनीरं श्रुत्वा खानयितारं प्र
त्यागत्यां धुगुणानुक्त्वा स्वां धोनीरमात्रं यया च्येद्बहुजनः सुखं
यायात् ॥ इत्यादि निंदंति ॥ इयं च निंदात्वमदृष्ट हीनो रंडा
पुत्र इत्यादि पर्यवसायिनी ॥ तथा तंतु हीनं कुलं चापि ॥ त्यक्त
चिंतमपि मामन्विष्य कुलगुणानुवाद पूर्वकं चिंतामुद्भध्यो द्व
ध्येव सर्व संपत्समृद्धस्यास्य कुलस्य तंतुमात्रं तंतु श्चे किमु
वक्तव्य मित्यादि निंदंति ॥ इयंच निंदात्वं पुत्रहीनः पापीत्यादि
पर्यवसायिनी तथाच्य मन्तावतो हं भविष्यामीति भावतामामपि
जना नत्यजंति ॥ कथं तूष्णीं कामास्से इति भावः ॥ अस्तिचैवं
लोकरीतिः ॥ कथमन्यथा पापिना मन्यत्र पापसंक्रांतिः स्यदिति
भावः ॥ जनाः तावत् निंदंतु नंदंतुवा ॥ तावता तव किं भवि
त ष्यतीत्यत आह ॥ किं करोमि ॥ हे भूदेव इह भूलोके क्व गच्छा
मि ॥ किं करोमि किं विषं पास्यामि ॥ किमूढ्वे धन वाक्षिपापि ॥
पुरतो मम का गतिः ॥ दुःख शांत्यै कः पंथा इत्याधि र्जनिष्यते
इहामुत्र फल भोग विरक्तस्सन् भवाब्धिं प्रतरेत्यत आह ॥ कं
देवमिति ॥ कं देवं शिवं वा ब्रह्माणं वा विष्णुं वा शरणं गत्वा भवा
ब्धिं संसार दुःख सागरं प्रतरामि प्रतरणोपाय भूत तादृश भवदुपा
सनायाः कालोऽतीत इति भावः ॥ उपक्रांत मनुसरन् द्वितीयेऽपि
तथा निषेधं कुर्वन् एकांश तत्सुकृत फली भूतं सुखकारणं निषेध
यति ॥ रुदंतं पुत्रमालोक्य प्रेम्णा वाचा शमय्य तं इत्यादिना मही
पतिरित्यंतेन रुदंतं पुत्रमालोक्य प्रेम्णा स्नेहे नोपलक्षित या वाचा ॥
तं रुदंतं ~~पुत्रमालोक्य~~ शमय्य ऊँ हलु लुवामीति बालरोदन
शामक यंत्र शास्त्रोक्त बीज मंत्रेण शांतरोदनं कृत्वा सांत्वयित्वेति
यावत् मारुदस्वेति नोदितं तया रुदंतं पुत्रमालोक्य आत्मसतीं
मृषाविनिंद्य ॥ मूढे पंडितमानिनि काले काले कर्तव्या चतुरे ॥
मंदगमने इत्यादि मृषापरिभाष्य आशु पुत्रं पयः पायय ॥
आशय नोचेत्वां ताडयामि इति आहत्मीति आत्म सतीं प्रतिनो
दितं ॥ २८ ॥ रुदंतं पुत्रमित्यत्रोन्तर श्राप्यनुषज्यते ॥ घंटां चेति ॥
रुदंतं पुत्रमालोक्य घंटां प्रतिमां। अर्घ फलंच कंदुकं चते ॥

भ.पु किं करोमीह भूदेव क्व गच्छामीति का गतिः ॥३६॥ कं देवं शरणं गत्वा भवाब्धिं प्रतराम्यहं ॥ रुदंतं पुत्रमालोक्य वाचा प्रेम्णा शमय्यतं ॥३७॥ नोदितं मारुद स्वेति विनिंद्यात्म सतीं मृषा ॥ पयः संपाययेत्याशु नोचेत्वां ताडयाम्यहं ॥३८॥ घंटाच प्रतिमां देहि पुत्रस्य फल कंदुके ॥ गज मारोप्य तनयं कुरु ग्राम प्रदक्षिणं ॥३९॥ सभां गच्छाय राजेंद्र तथा ताळस्वनेन च ॥ अजातपुत्र शोकेन मूर्च्छामाप महीपतिः ॥ ४०॥ वं.गा. ६

कदळीफल गेंदुके देहीति क्रीडयितारं प्रतिनोदितं ॥ तथा रुदंतं पुत्रमालोक्य गजमारोपेत्यादि मंत्रिणं प्रतिनोक्तं ॥ रुदंतं तमालोक्य राजेंद्र महाराज ताळस्वनेन वाद्येन सभां गच्छेति पुत्रं प्रीतिनोदितं ॥ अत एकांशा सुकृतीनेत्युपपादित मियन्ता प्रबंधेन सांत्वनादि सभाप्रवेशानां तौ द्विवर्ष पर्यंतं मे कांश सुकृतफलं ततः किमभूदित्यत आह ॥ अजातेति ॥ अजातः पुत्रो यस्य स अजातपुत्रः ॥ अहं अजातपुत्र इति शोकः ॥ आजातपुत्र शोकः तेन ॥ यद्वा अजातः पुत्रः इति शोकः अजातपुत्र शोकः इति त्रिपदकर्म धारयो वा ॥ ननु इष्ट वियोगादि जन्य दुःखाति भूमिः शोकः ॥ वियोगः संयोग पूर्वकः तदभावे कथं वियोगः ॥ तदभावेच कथं तद्घटितः शोक इति चेन्न ॥ इष्ट वियोगादीत्यादिना निष्ट संयोगस्यापि गृहीतत्वा दजात पुत्रत्वस्य अजातपुत्र जननस्य वा निष्टत्वेन शोकसंभवात् ॥ तदुक्तं ॥ प्रियाप्रिय वियोग सुयोग जन्म शोकाग्निनेति ॥ मूर्च्छ शोकाग्नि प्रशिथिल बलानां बाह्येंद्रियाणां निमीलनात्मनस आभ्यंतरीं मध्यम वृत्ति रूपां मूर्च्छामापेत्यर्थः ॥४०॥ तृतीयेष्वपि तथा निषेधयति ॥ कवच मित्यादिना अलंकृतः सुत इत्यंतेन अद्भुतं कवचं शिरो भूषणं किरीटं तथा रत्न वज्र खचितं केश भूषणं केशपाश भूषणं कारयित्वा तनयं कृतचूडमंकमारोप्य यद्वा तनोति मुदमिति तनयः तं पुत्रानंदकरं अंकमारोप्य सुतः न मयालंकृतः ॥४१॥ तुरीयेष्वपि तथा निषेधति ॥

श.
म.
उ

भ·पु· नोपनीतो ऽति प्रीत्यैवेति इदमेकं वाक्यं स्पष्टं ४॥ पंचमेपि एतद्वा वे·मा·
दि नैव निषेधति॥ नोपनीत इत्यादिना॥ द्विजेत्यंतेन॥ बाल्येतु ६
शैशव एव॥ जातकर्माणि॥ बहुवचनमाद्यर्थे॥ जातस्य कर्मा
णीति वा॥ जातकर्मादि कर्माणि ज्योतिर्विदपूजा शुभादिज्ञान ग्रह
मंत्र जप विनियोगादि कर्माणि॥ यद्वा नांदी सुवर्णादि द्वादश द्रव्य
दान ज्योतिर्विदपूजा स्तनपाना अवयव बहुत्वाद्व बहुवचः॥ तथा पु
त्राभिधं पुत्रस्य अभिधानाम यस्मिन्कर्मणि तत्तथा नामच
ने कृत्वा यथा शास्त्र जात्युचित कालं द्वादश वार्षिक उपनेयापि काल
संकोचेन पांचवार्षिकोपि सुतो ऽति प्रीत्या नोपनीतः॥

कवचं कारयित्वातु शिरो भूषण मुत्तमं द्रुतं॥ केश भू
षण मत्यर्थ रत्न वज्र समाकुलं॥४१॥ अंकमारोप्य तनयं
नमयालंकृतः सुतः॥ नोपनीतोति प्रीत्यैव सुतोमे पं
च वार्षिकः॥४२॥ अष्टमे वाथ दशमे नकृतो दार सं
ग्रहः॥ बाल्येतु जातकर्माणि तथा पुत्राभिधं द्विज॥४३॥
तेनार्जितं धनं ब्रह्मन्नोपजीवित मद्यमे॥ अभिषिच्य
या· सुतं राज्ये भार्यया कृत भोजनं॥ नगतं च वनं वि
द्वन्पारंपर्यगतं द्विज॥

तथाष्टमे वाथ दशमे वा दारसंग्रहो नकृतः ५॥४३॥ षष्टेष्व
पि तथा निषेधति॥ तेनार्जित मित्यादिना गत मित्यंतेन॥ यथा
जात्युचित कालं असंकोचेन कृत जातादिकं भार्यया कृत भो
जनं सुतं राज्ये ऽभिषिच्य तेनार्जितं धनं धान्यं अद्य वा
र्द्धकया वस्थायां नोप जीवितं जीवनाय नोपयुक्तं॥ ततो विष
य विरक्ते नमया पर्यागतं वंशक्रमादागतं वनं नगतं॥६॥
अहो दरिद्रस्येत्यादि॥ प्राप्य जनक घट कुड्य सन्नि भं मम
शरीरं॥ सुपुण्ये सुधर्मस्य कुले वृथा जातं॥ मनुष्याणा मि
त्यादि॥ बहुपुण्य वशादिति॥ तदुक्तं पाद्मे॥ पुण्येन प्राप्यते

भ·पु पुत्रः पुण्येन प्राप्यते कुलं ॥ सुगर्भः प्राप्यते पुण्यैः तस्मा वें·ग॥
त्पुण्यं समाचरेति ॥ अस्माक मित्यादि ॥ पापानां राजपुत्र मा
रकाणां संभवेदिति लिङ् संप्रश्ने कुतो न जायेत ॥ धर्म संता
नेति ॥ संतानो द्विविधः धन संतानो धर्म संतानश्चेति ॥ अन्यो
द्वि ऽप्यो द्विविधा ॥ मानुष धनसंतानो देव धन संतान श्चेति ॥ मानुष
धन संतानः प्रिय पुत्रः ॥ देव धन संतानः सत्पुत्र सच्छिष्य
सत्प्रबंधादयः ॥ धर्मसंतानः सद्दृहितृका सारवृक्षादयः ॥ य
द्यपि राज्ञः राजसुत मारणस्य दुष्कर्मणः प्रसक्तिरस्ति नत दुहि
तृ मारणस्ये त्येतत्खं प्रश्न मूलं ॥ शोकं शमयन्हरिं स्मरति ॥ वर
देत्यादिना ॥ वेंकटश्चासौ बीशश्च तथा ॥ नग धीश वेंकटाचल
नाथ ॥ वृक्षराज अश्वत्थ नारायण ॥ सत्पुत्रवंत इति ॥ एतल्ल
क्षणं पाद्ये ॥ पुत्रस्य लक्षणं पुण्यं तवाग्रे प्रवदाम्यहं ॥ पुण्य
प्रसक्तो यस्यात्मा सत्य धर्म रतः सदा ॥ शुद्धिमान्ज्ञान संपन्नः
तपस्वी वाग्विदां वरः सर्व कर्म सुसंवीतो वेदाध्ययन तत्परः ॥
सर्व शास्त्र प्रवेदीच देव ब्राह्मण पूजकः ॥ याजकः सर्व यज्ञानां
दाता त्यागी प्रियं वदः ॥ विष्णु ध्यान परो नित्यं शांतो दांतः सु
हृत्सदा ॥ पितृ मातृ परो नित्यं सर्व स्वजन वत्सलः ॥

---

अहो दरिद्रस्य महानुभाव सत्पुत्र हीनस्य गतिर्भवे
त्का ॥ वृथा शरीरं घट कुड्य सन्निभं जातं सुधर्म
स्य कुले सुपुण्ये ॥ ४५ ॥ मनुष्याणां मनाथानां दुर्लभं
पुत्र जन्म च ॥ बहुपुण्य वशात्पुत्रो जायते मानवोदरे ॥ ४६ ॥
अस्माकमपि पापानां कन्यका नैव संभवेत् ॥ सत्पुत्री
नैव संजाता धर्म संतान संज्ञिका ॥ ४७ ॥ वरदाच्युत
गोविंद जगन्नाथ जगद्गुरो ॥ सुब्रह्मण्य सुराधीश
रामकृष्ण नमोस्तुते ॥ ४८ ॥ वेंकटेश रमाकांत वराह
वदनाच्युत ॥ नारायण नगाधीश कृपां कुरु कृपानिधे ॥ ४९
सत्पुत्र वंतः खलु भाग्यवंतो त्यपुत्र वंतो भुवि दुःखवंतः ॥

भ-पु.

संसार सागर समुत्तरणेष्व शक्ताँ कालोगतिः कर्म फलानु भोगिनां ॥९०॥ एवमुक्ता महीदेवं विरराम महीपतिः ॥ पापिष्ठोहं दुराचार असुखो हं दरिद्रवान् ॥९१॥ हालोकान् कान् गमिष्यामि क्रूरं वा नरकं गुरो ॥

वेंगा ६८

कुलस्य तारको विद्वान्स्वकुल प्रति पोषकः ॥ एवं गुणैस्तु संयुक्तः सुपुत्रः सुखदायकः ॥
अन्ये संबंध संयुक्ताः शोक संताप कारकाः ॥ उदासीनेन किं कार्यं फल हीनात्मजेनच ॥ आयांति यांतिते सर्वे दुःखं दत्वा सुदारुणं ॥ पुत्ररूपेण ते सर्वे संसारे द्विज सत्तमे ॥ इति ॥ भाग्यंतः खलु तत्सा ध्ये हामुत्र सुखवंतः प्रसिद्धाः ॥ अपुत्रवंत इति ॥ प्रशस्ताः पुत्राः येषां संति ते पुत्र वंतः ॥ नपुत्र वंतः अपुत्र वतः ॥ प्रियसत्पुत्र हीनाः ॥ पुत्राः पूर्वोक्ताः तद्विरुद्धाः अपुत्राः दुष्पुत्राः ते येषां संतिते तथा दुष्पुत्रास्तु चत्वार उक्ताः पाद्मे ॥ भर्तः पंचविधाः पुत्राः जायंते तान्वदाम्यहं ॥ न्यासापहारिकं चैकं ऋणसंबंधितं परं ॥ रिपुं प्रियमुदासीनं इति ज्ञाता भवंतित इति ॥ एतेषां लक्षणानि तत्रैव द्रष्टव्यानि ॥ असत्पुत्राः दुष्पुत्राश्च भुवि दुःखवंत इति ॥ हि अनुभव सिद्धं ॥ किंम्वमुत्रेति भावः ॥ ऐहिक सुखं नश्वरमिति प्रियस्याप्यत्र गणनं ॥ एतदप्युक्तं ॥ पुत्रेण लोकाञ्जयति पुत्रस्तारयते कुलं ॥ सत्पुत्रेण महाभाग पिता माता प्रजीवति ॥ एकपुत्रोवरः कांत बहुभिः निर्गुणैस्तु किं ॥ एकस्तारयते वंशं अन्ये संतापकारकाः ॥ पूर्वमेव मया प्रोक्ता ऋणसंबंध भागिनः इत्यादि ॥ दरिद्रवान् निर्भाग्यः भावप्रधानो दरिद्र इति ॥ किमुपायमिति ॥ समस्यं कथं भूतं उपायं कुर्म इति शेषः ॥ अयं भावः ॥ हे द्विजोत्तम अंशांश सुकृतिनः आरभ्य त्रिभाग सुकृतिनां वार्तायास्तु कालो अतीतः परंतु ॥ संभव सं भोग काल संकोचक पूर्ण सुकृतं पुरा चीर्णमस्ति चेत्तस्य कार्योन्मुखत्वे निरपायः क उपाय इति ॥ गुरुरिति कुलाचार्यः ॥ महं पुत्रेष्टि स्वर्ण

भा·पु· त्प्रचोदिता कुमारी अरविंद नेत्रा शुभा पुरेंदिरेवेति समाभाष्य॥ वें.मा
सम्यक्संबोध्य तैः सविमर्श मभ्यनुज्ञाद्विदत्ते नृपोत्तम॥आशु ६
शिशुं उद्धर्तुं हस्त शिशुमिव स्थितां॥ हस्ते प्रगृह्य दक्ष हस्तेति धा
य वामेन प्रगृह्य यथा मोदते तथा दीनो संतान दरिद्रो मुमोदेत्य
न्वयः॥ नत्वेव मद्भुत सृष्टेः कारणं न पश्यामः॥ हरीच्छा चेदेत दन्य
त्रे च्छायास्तादृशं तेजोन दृश्यत इत्यत आह॥ मायामिति॥ हरेरि
त्यंत मेकं वाक्यं को जानातीति शेषः॥ दुरत्ययां इयती दृशीति प्रती
त्यात्येतु मशक्यां महेशस्य हरेर्मायां इच्छां इयती इदृग्बलवतीति।
को जानात्वित्यर्थः॥ हरीच्छया सीतायाः सृष्टिरीदृशी दुष्टचराता
हरीच्छा यास्तादृशं तेजोस्तीति भावः॥ अथ वितर्कते राजा कस्मै
प्रदेया प्रतिगृह्यते मया इति॥ इदमेकं वाक्यं॥ इयं कन्या तादृशे,
शेच्छया इदानीमेव यस्मै कस्मै प्रदेया भवति प्रदातुं योग्या भवति
उतकालांतरे प्रदानं कर्तुं पालनाय मयेदानीं प्रतिगृह्यते।का री
च्छा कथमस्तीति भावः॥ यद्वा माया मित्यादि मयेत्यंतमेकंवाक्यं॥
महेशस्य हरेः दुरत्ययां हरिं विनान्ये अति शेतुं अशक्यां मायां
श्रीभू दुर्गाख्यां मायां पत्नीं॥ इदनी मिहलोके कोत्येति॥ सच
त्रियुगहूतिः॥ अतः कस्मै इयं कन्या मया प्रदेया केनच प्रतिगृह्यते
कन्येयं हरिमनु अतो नकस्मैचित् नकेनचिदिति योजना॥

इत्थं समाभाष्य नृपोत्तमः शिशुं हस्ते प्रगृह्याशु मुमोदद्दीनः॥
मायां महेशस्य दुरत्ययां हरेः कस्मै प्रदेया प्रतिगृह्यते मया॥६८॥
उवाचाकाशवाणी पुत्रीयं तव पुण्यदा॥ सुरक्षस्व महाभागां
बहुकीर्ति फलप्रदां॥६८॥ इत्यनंतगतां वाणीं श्रुत्वा राजाति
हर्षितः॥ तां कन्यां प्रतिगृह्याशु स्वभार्यां प्रत्युवाच सः॥७०॥
शृणु भद्रे महाप्राज्ञे देवदत्तामिमां शुभां॥ संवर्धस्व वयं
पुत्रीं यथा योनिगतां तव॥ इत्युक्त्वा तत्करे दत्वा बहुदान
मथाकरोत्॥ कन्यागमन पुण्येन सा देवी गर्भमादधौ॥७१॥

भ्र.पु. | यदिमा भूतां दानप्रतिग्रहौ तर्हि अधर्मोऽकीर्तिश्च स्यातामिति | वें.भा.
चिंतयन् क्षणं तूष्णीमतिष्टत् ॥८८॥ ततः किमभूदित्यत आह ॥ ६९
उवाचेत्यादिना करोदित्यंतेन ॥ पुत्रीयं तव सुरश्रेष्ठ त्यनेन वि
त तर्के द्वितीय पक्षाभ्यनुज्ञान कृता बहुकीर्ति फलप्रदां ॥कीर्ति
पदेन तत्साध्यः स्वर्ग उपलक्ष्यते ॥ फलं मोक्षः तथाच स्वर्ग
मुक्ति फलदामित्यर्थः ॥ अनेन पुण्यदामित्यनेनच चिंतापरि
हारः ॥ देव दत्तामिति ॥ उक्तोऽर्थः॥ अतो यथा योनिगतां स्वगर्भ
जातां स्वगर्भजातां पुत्रीं यथा स्वजाति नीति ॥ कुलाचरं मातरो
वर्द्धयंते ॥ तथातवेमां शुभां वरां पुत्रीं वर्द्धयस्व नपृथक्कुरु
इति भावः ॥ यतंच यजाव भृ थांतं समाप्त वानिति भावः ॥
कन्यागमन पुण्येन तदनंतर कालिक तत्पालनात्मक पूजा
" पुण्येनेत्यर्थः ॥९३॥ ततः किमभूदित्यत आह ॥ गर्भिणी
मित्यादि हेत्यंतेन ॥ गर्भिणीं व्यक्त गर्भां तृतीय मासादौ दृष्ट्वा
(कुं गर्भस्य चिह्नं लक्षणं यस्मिकर्मणि तद्गर्भ चिह्नं पुंसवनं ॥
अंउ देशीय माष द्वय लिंग जातीय यवात्मकं गर्भ लक्षण कर
णात् ॥ तृतीयेव चतुर्थेव मासि पुंसवनं भवेत् ॥ व्यक्ते गर्भे भवे
त्कार्यं सीमंतेन सहाथवेति ॥ जातकर्णपः॥ गर्भ चिह्न पदं एतदन
वलोपनायन स्तो अजीन दूर्वारस सेचनात्मकं नवलोभस्याप्यु
पलक्षणं ॥ सीमंतं ॥ रूधिर प्रियालक्ष्मी भूत राक्षसीगण निर'
सन द्वारा श्री लक्ष्मी समावेशनाय सशला द्वैदुंबर गलप्स
युतया त्रेण्या शलल्या सहित कुश पिंजूलैः केशपद्धति करणात्म
क सीमंत नामकं कर्म विधिवत् ॥ विधि गृह्यसूत्रं तदर्हतीति
विधिवत् ॥ तदर्हतीति वतिः ॥ ब्राह्मणैः सह यजुर्मंत्रगणैः
समागते ॥ गर्भ कालाभि वृद्ध्या संपूर्णे ॥ मासीति ॥ भानौ कन्या
गते मासि प्रथमे पक्षे प्रथम पंच दशके दशमे रोहिणी युते
शुभे दिने सायंकाले इति योजना ॥ रोहिणी युते रोहिणी द्वितीय
यपादे बोवावीबू रोहिणीति अवकहड सूत्रात् ॥ पुत्रीसति
प्रवक्तृणां पुरोधसां ॥ सर्वंच तत्स्वंच सर्वस्वं तदस्यास्तीति
मत्वर्थसंबंधेऽच् संबंधश्च कर्मता ॥ तथाच सपदि सर्वाणि
भिष्वंगं दत्वान्य वस्त्राद्यलंकारैः कृतस्त्यक्त तात्कालिक

भ·पु सन्निहित वस्त्राभरणादि विग्रहोपकरण सर्व स्वकर्मकं दानं आचरत् अकरोत् ॥६८॥ वें·मा ६

> गर्भिणीं स्वसतीं दृष्ट्वा गर्भचिह्न चकारह ॥ पंचमेमासि संप्राप्ते सीमंतं नृप पुंगवः ॥६२॥ कारयामास विधिवत् ब्राह्मणैर्यजुषांगणैः ॥ ततः कालांतरे बाला नवमासे समागते ॥६३॥ मासेतु दशमे प्राप्ते सुषुवे पुत्रमुत्तमं ॥ मासि कन्यागते भानौ दशमे रोहिणी युते ॥ पक्षेतु प्रथमे वीर सायंकाले शुभे दिने ॥ पुत्रोत्पत्ति प्रव हृष्णां सर्वस्वं दानमाचरत् ॥६५॥ गवां कोटि सहस्राणां अश्वानाम युतं तथा ॥ नव धान्यादिकं धान्यं विनाते च्छत्र चामरे ॥६६॥.

ततः किमकरोदित्यत आह ॥ गवांकोटि सहस्राणा मश्वानाम युतं तथा ॥ नव धान्यादिकं धान्यं विनाते च्छत्र चामरे ॥स्नानं कृत्वा नृप श्रेष्ठः स्वस्तिवाचनमाचरत् ॥ जातकर्मादिकं कर्म कृतवान्तत्क्षणे नृपः ॥ अन्वेयं योजना ॥ हे राजश्रेष्ठ जनक नृपः अनंतराजः ॥ तत्क्षणे सद्यः ॥ जातमात्रस्य पुत्रस्य मुखं स्वकुलदेवता वृद्धभि वादन पूर्वकं अवलोक्य ॥ अरणी नद्यां उदङ्मुखं स्नानं कृत्वा न्य वस्त्राद्यलंकृत स्त्यक्त नादात्विक सर्वस्वं दत्वा सवैभवं पत्नी गृहमाविश्य स्वस्तिवाचनं नांदी समाराधनं चाचरत् ॥ ततः जातकर्मादिकं ॥ घृत मधु प्राशन मूर्द्धाघ्राणनादि स्तन्यपानां तं ॥ जातकर्म आदिर्यस्य तत्तदादिकं ज्योतिर्वित्पूजा शुभादि चिंता ग्रहमंत्र जप शांति सूक्त पठनादि विनियोगादि कर्मकृत वान् ॥ ततो देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनां ॥ आयांति तद्हस्तस्मात्पुण्यं पूज्यं च सर्वदा ॥ तत्र दद्यात्सुवर्णंतु भूमिं गां तुरगं तथा ॥ छत्रं छागं वस्त्रमाल्ये शयनं चासनं गृहं ॥ इति व्यास वचनानुसारेण स्वर्णादि दानं करिष्यमाणः चंद्र

६० मंडल संकाश मातपत्रं च पांडरं । सच्छं द्युतिकरं श्रीमदभि
भ.पु षेक पुरस्कृतं ॥ चंद्रांशु विकच प्रख्यं कांचनं रत्न भूषितं ॥ स वें मा
ज्जं संपत्करं श्रीमद्बाल व्यजन मुत्तमं इत्युक्त लक्षणे अभि ६
षेक पुरस्कृते ये शत शलाकातपत्र हेम मंजीर गर्भ वाल व्य
जने ते विना वर्ज्जयित्वा ॥ अथ दानाय बहिरूपकल्पितानां
कोटिसहस्त्राणां ॥ कोटिभिः गुणोत्कर्षैः सहस्राणां सहस्र
संख्याकानां गवां दानमाचरत् ॥ आत्युत्कर्षा श्रयः कोट्य इत्यमरः ॥
प्रथम गवीमारभ्य द्विगुण त्रिगुणादि क्रमेण सहस्रतमास
हस्र गुणितेत्यर्थः ॥ तथा तद्वत् अयुतं अवशिष्टं गुणोत्कर्ष
विशिष्टं यथा भवति तथा ॥ तथा सहस्राणां अश्वानां दानमा
चरत् ॥ अथ बहिरुपकल्पितं अंतस्थितंच नव धान्यादिकं
नवचतानि धान्यानिच नव धान्यानि गोधूमादि नव धान्यानि ॥
आद्यः प्रभृतयः प्रधानानिच यस्याष्टदश नूतन धान्य स
मुदायस्य तत् नव धान्यादि तदेव तत्कं धान्यं अष्टादश
नूतन धान्य वृन्दं ॥ यद्वा नव धान्यानि नूतनाष्टादश धान्यानि
गोधूमादीनि आद्यः प्रभृतयः प्रधानानिच यस्याष्टादश
पुराण धान्य समुदायस्य चिरस्थितस्य तन्तदादि तदेव
तत्कं धान्यं अष्टादश पुराण धान्य वृन्दं ॥

स्नानं कृत्वा नृपश्रेष्ट स्वस्ति वाचन माचरत् ॥ जातकर्मा
दिकं कर्म कृतवांस्तत्क्षणे नृपः ॥ ५७ ॥ दिनेतु द्वादशे प्राप्ते
सुकृतं पुत्राभिधं तथा ॥ तद्दिने बहु विप्राणां भोजनं
दापयन्नृपः ॥ ५८ ॥ नाम्नातु वसुदानेति लोके ख्यातिं
गमिष्यति ॥ ऋषयः ॥ श्रुतं पुत्र प्रभावं च नश्रुतं
ऋषि पुंगव ॥ अयोनिजास्तत्पुत्र्याः किं नाम कृतवा
न् नृपः ॥ ५९ ॥ सूतः ॥ पद्मोदरां पद्मगर्भां पद्मजा
तां वराननां ॥ पद्मया अवतारत्वाद्राजा पद्मावतीतिच ॥ ६० ॥
कृत्वातु नामकरणं निजपुत्र्या नृपोत्तमः ॥ वर्द्धमानौ
सुतौ दृष्ट्वा राजा संतोष मागतः ॥ ६१ ॥

भ·पु· एवमादि पुत्रजन्म भूस्थित गृह तदुपकरण विग्रहोपकरणयुक्त सर्व स्वकर्मकं दानमाचरदिति ॥ चामरं तु प्रकीर्णकं हैमं छत्रं त्वातपत्रं राज्ञस्तु नृपलक्ष्म तत् इत्यमरः ॥ दापयन्नाशीर्य याच इति शेषः ॥ तेच विप्राः दान संतुष्टाः बहूनां वसूनां दानं यस्मिन्जाते जातमिति वसुदानेति त्वकृत नाम्ना कीर्तिं गमिष्यति इत्याशीः ईदुरिति शेषः ॥ सवा एष महानज आत्मान्नादो वसुदानो विंदते वसु य एवं वेदेति श्रुतिशिरः सिद्धं इदं नामेति ध्येयं ॥ अथर्षयः प्रसकृपानुप्रस कृपा सूतं पृच्छंति ॥ श्रुतमित्यादिना ॥ पुत्रप्रभावं पुत्रस्य प्रभावः उत्पत्ति निमित्तं यस्मिन्कर्मणि तत्पुत्रप्रभावं ॥ जातकर्मादि यद्वा पुत्रस्य प्रभावः कोश जंते जोयस्मात्तत्तथा नामच श्रुतं ॥ पद्मोद रामिति ॥ पद्मस्योदरं पद्मोदरं तत् स्थान तया ऽस्या स्तीति प द्मोदरातां ॥ पद्मे स्थितां पद्मवर्णामित्यादि श्री सूक्ते ॥ पद्मग र्भां पद्मः पद्मयोनिः गर्भो अर्भको यस्या सा तथा । तां ॥ माया देवी सुतश्च सः इत्यमरः ॥ यद्वा पद्मः महापद्मः तदुपलक्षित नदादि नव निधिर्गर्भे कुक्षौ यस्याः सा तथा तां ॥ नवनिधि स्त्वमेवेंदिरे ॥ त्वद्गर्भगत हेमादीन् त्वकुक्षिगत सर्वस्वं इत्या दि तद्धृदये पद्मजातां पद्माभिव्यक्तां ॥ यद्वा पद्मा पद्मिनी तस्याः जातं जातिः यस्याः तथा चंपक सुप्रभासा कन्या पद्मि नी भवेत् ॥ इति वरान नां अरविंद नेत्रां पद्माक्षी पद्मसं भवेदितिच ॥ पद्मया अवतारत्वादिति ॥ पद्मांश वेदवत्य वतारत्वात् ॥ पद्मावती उक्त रीत्या साक्षात्परं परात्यतर सं॰ बंधेन मद्य मस्यास्तीति संबंधार्थे मतुप् ॥ शरादीनांचेति मतौ संज्ञायां दीर्घः ॥ क्रमात्संख्या हस्ति बिंद्वो निधि व्यू हांतरादिषु ॥ अब्जे भार्ङि श्रियोः पद्मं क्लीबे पुंसस्त्रिया स्त्रियां इति रत्नमाला ॥ पद्मो ब्रह्मा समुद्दिष्टः पद्मा श्रीर पि चोच्यत इत्यभिधानं ॥ गर्भोऽर्भके नाट्य संधौ कुक्षौ पन स संकटे इतिच नामकरणमिति नाम्नः करणं कृतिर्यस्मि न्कर्मणि तत्तथा ॥ ८१ ॥ रामाचंद्रमसौ ॥ तद्दंशे ॥ किंतेन सु कृतं राजा ॥ राज्ञेति वा पाठः ॥ जांते तृतीयांतं राजेति ॥ किं वित र्के तेन राजा राज्ञा कृतं सुकृतं किं कीदृशं कियत् कियद्वधीति ॥

वें·मा· ६

ते· ८

भ·पु· अतो न पर्यवसाय माम इति भाषः ॥ बहुजन्मार्जितं फलं वें·मा
एतत्फलं बहुजन्मार्जितं बहुजन्मभिः कृत सुकृतार्जितं ॥ दृष्ट्वा ६
संतष्टमनसा सेपूर्णा नंदसागरः इति ॥

अकलंकेंदु सदृशी रामा चंद्रमसा वु भौ ॥ किं तेन सुकृतं
यद्वा बहुजन्मार्जितं फलं ॥ ६२॥ अग्रजां पुत्रिकां दृष्ट्वा तदं
ते पुत्रमुत्तमं ॥ दृष्ट्वा संतुष्टमनसा संपूर्णा नंदसागरः॥६३॥
इत्थं काले गते तस्मिन्सा बाला यौवनं गता ॥ यौवनाढ्य
विशालाक्षीं दृष्ट्वा राजा व्यचिंतयत् ॥६४॥ विचारयामास
नृपः पुत्र्यर्थं वरमुत्तमं ॥ नप्राप दुःख संतप्तः कस्मै
देया सुता मया ॥ ६५॥ दृष्ट्वा राजा सुतं बालं ब्राह्मणं कृत
न्द्वि वान्द्विजैः ॥ पद्मावती तदा बाला पुष्पार्थं वनमागता॥ ६६॥
वसंतमागतं वीक्ष्य पुष्पारामे चरिष्यति ॥ पुष्पाण्या
हारयामास तरुमूल पु श्रिता ॥ ६६ ॥

तत्र निमग्नो भूदिति भावः बाला कुमारी यौवनं गता युवती
धर्मं प्राप्ता ॥ राजा व्यचिंतयत् ॥ पुत्रीं परिणीय पुत्र मुपन
दि· याम इति आलुलोच इत्यर्थः ॥ पुत्र्यर्थं पुत्रे अर्थः पुत्र्यावा
अर्थ्यः आकांक्षित इत्यर्थः तं ॥ न प्रापेति ॥ क्वचिद्दैव घटना
भावात्क्वचिन्मनः कूटा भावादिति भावः ॥ कस्मै देया सुतामया
इति दुःख संतप्तः ॥ ब्राह्मणं कृतवान् ब्रह्मवेदः तदणतीति ब्रा
ह्मणः चतुष्पाद्धनुर्वेदा ध्यायिनं कृतवान् ॥ अण रण शब्दे॥
द्विजैः गुरुभिः ब्रह्मवादिभिः पुष्पारामे चरिष्यति इति शीता
वद्वन संचार कुशला पद्मा वसंते परः शताभिः सखीभिः समवे
ता तादृशीभिरेव मुक्ता झल्लरी लसद्रत्न खचित बाल विलासा
याप्य याने नोह्यमाना श्वेतात पत्र बालव्य जनादिभिः सेव्य
माना शंखतूर्यादि वाद्यैः घुष्यमाणा प्रतिदिनं वनं गच्छत्या
गच्छति च ॥ इदं च प्रतिदिनं राज्ञः पौराणां च महोत्सवः इति कथा
संदर्भो बोध्यः ॥

 ॥ उत्तरानुगुण्यादौ चिन्ताच्च पुष्पाण्या हारया मासेति सखीभिरिति शेषः ॥६८॥ स्वकर्तव्य श्रीनिवास सेवार्थे नारद आगत इत्याह तदेत्यादिना ॥ वृद्धो भूत्वेति ॥ सिद्धत्वा प्रकृत कार्यानुकूलतयेति भावः ॥ जटाधरः व्रतांग विशद केश चूडा धरः ॥ व्रतिनस्तु सटा नटेत्यमरः ॥ धूलि धूसरि तांग इति ॥ बहुलोक संचारा द्धूल्या धूसरितं ईषत्पांडु अंगं यस्य स तथा ॥ ईषत्पांडुस्तु धूसर इत्यमरः ॥ कृधूमदिभ्यः कि दिति सरः ॥ कर्पूर च्छुरि तद्युतिः कर्पूरो घनसारः च्छुरदने भावेक्तः ॥ च्छुरित मंगलेपनं ॥ तथाच कर्पूरांग लेपन जन्य कांति रिव कांति रित्यर्थः ॥ विस्मयाकुल मानसा विस्मयाविष्टं मानसं मनो यस्याः स तथा ॥ पद्मावती उवाचेति शेषः ॥ किमिति कोसा विति ॥ जानंत्यपि ॥ असौ दूरे आगच्छन् पुरुषः कः यूयं जानीथ किमिति ॥ सख्यः ऊचुः ॥ भयंकरश्चायमिति ॥ मे पर्त्ति भयेषु कृञ इति खच् ॥ अयंच समीपे आगच्छन् भयंकरः ॥ अत्र स्थिताः सर्वाः वयं कन्यकाः अतो भीषयतीति इति भावः ॥ पद्मावाच किमिति ॥ कथमत्रेति ॥ अत्र अस्मिन्विषये अस्माभिः कथं कर्तव्य मिति सख्यः ऊचुः ॥ विचार्यतामिति ॥ किं वा भवतु सौम्यव दृश्यते ॥ भयंकरोवा ऽभयंकरोवेति विचार्यतामिति भावः ॥ ततः पद्मा विचारयति ॥ कोसीति आदिना ॥ हे विप्र । वि । प्रांत्यादि विशिष्टेषु । प्र । प्रकृष्ट । किमर्थं भीषणार्थं वा । मद्वाय श्लोकः सखीजन प्रश्नपूर्वकः पद्मोन्तरोन्तरको व्याख्येयः ॥ 

तदागतो नारदस्तु वृद्धो भूत्वा जटाधरः ॥ धूलि धूसरितांगश्च कर्पूर च्छुरितद्युतिः ॥६८॥ आगतं तं मुनिं दृष्ट्वा विस्मयाकुल मानसा ॥ कोसौ भयंकरश्चायं यं कथमत्र विचार्यतां ॥६९॥ कोसि विप्र महाप्राज्ञ किमर्थं त्वमिहागतः ॥ अहं कुलगुरुः साक्षाद्युष्माकं वरयोषितः ॥७०॥ हस्तं दर्शय मे पुत्रि लक्षणानि वदामि ते ॥ उवाच लज्जया देवी किं वदिष्यसि ब्राह्मण ॥७१॥ विद्धि त्वमपि तत्तुल्यं मां मनसा निर्मलेन च ॥

भ.पु. नारदः उत्तरयति ॥ अहमिति ॥ आदिना ताश्च यूयंच यूयं ॥ वें.मा ६.
यदादीनां मिथः ॥ सहोक्तौ यत्परं तच्छिष्यते ॥ तासां युष्माकं
देवरयोषितः युष्माकं वरयोषितां ॥ सीता सत्या रुग्मिण्यादि
भवतीनां कुलस्य सजातीय समूहस्य ॥ गुरुः हस्त लक्षणोप
देष्टा ॥ नित्यसापेक्षत्वात्समासः । अत आह हस्तमिति ॥ लज्जया
कांताभिलाषादि जन्यमनः संकोचेनोपलक्षिता देवी हेब्राह्मण
किं वदिष्यसि ॥ किंलज्जाकनं अयं भावः । इंगितज्ञोयं मुनिर्मा
कांतार्थिनीति जानाति । अतो ममांतनंगित मभिलाष वीजम
नेन बहिरूप्यते । अतोंतनंगं बहिरापतति ततो जनाश्चाप
हसंतीति चेतः संकोचइति ॥ ८१ ॥ अथनानद उवाच ॥ विद्धि
त्वत्पितृ तुल्यं मामिति । निर्मलेन मनसा युक्तं मां । निर्मलेन
मनसा त्वत्पितृसमानं जानीहीत्यर्थः ॥ एतादृशे मयि लज्जा
कुत इति भावः । हसन्निति ॥ अत्र तावत्संदर्भ शेषः ॥ नानदः
कदाचिद्वल्मीकंगं श्रीनिवासं दृष्ट्वा तेन सह संभाषणांत
उवाच ॥ लक्ष्मी सहायोपि त्वमेवमेकाक्येव वल्मीके वसती
ति ततः श्रीनिवास आह । वत्स लोयं अनर्थः आगतः तवैवं
जाते संतोषः । तथैवास्तु ममकिमपि मास्त्विति मृषा वि
रक्त्योवाच । ततो नानदः खिन्नः । एवंकालेगते इदानीं
पद्मावती लक्षणं दर्शनानंतनं, अर्जुनस्येव श्रीनिवासस्य
विनक्विनिति हसन्नित्यर्थः ॥ ८३ ॥ पद्मा मनोगत माह ॥
पतिनित्यादिना ॥ तद्व्याप्य लक्षणान्याह ॥ पाणीति आदिना ॥
पद्मादलोपेते । पद्मदल सदृशांगुलि शोभितौ । पद्मतलो
पेता वितिपाठे । पद्मतलं पद्मस्वनरूपं तच्चिह्नोपेतावित्यर्थः ॥
अधः स्वनरूपयोन स्निग्धतलं स्यादित्यमनः । चंद्रसमाकानं
पूर्णाऽकलंक चन्द्रसमाकृति कमलकुड्मलं । साचिकमल
कुड्मलाभं । दर्श संकाशौ । दर्श आदर्शः ( ब्रह्मणो लय इस
नोक्त मन्त्र द्रष्टव्यः)
कनकादर्श सन्निभौ कर्पून भाजनं तद्वत्स्वभाव सुनभि अधनं
नक्र पद्मदलाभं ॥ अंभोज मुकुलाकानं स्वांगुष्ठांगुलि सन्नकं खं ॥
हस्तद्वयं मृगाक्षीणां बहुभोगाय जायते ॥ चक्रस्वस्तिक शं
खाब्ज ध्वजमीनात पत्रवत् ॥

॥ इत्युक्ता ऋषिना थेन दत्वाहस्तं वनांगना ॥८२॥ सत्यं वद महा
प्राज्ञ लक्षणानि वनाणिमे ॥ धृत्वा पाणितलं प्राह हसन्विधि
तनूद्भव: ॥८३॥ पतिर्भवति धर्मज्ञेत्रि लोके शोनमापति: ॥पा
णी पाद तलोपेतौ पादौते स्वस्तिका युतौ ॥८४॥ मुखं चन्द्र सम
कानं चक्षु: कमलकुद्मलं ॥ तिलपुष्प समाकान नासिका ते विना
ज रंजिते ॥ ८५॥ कपोलौ दर्श संकाशौ आस्यं कर्पून भाजनं ॥ अधनं
नक्त बिंबाभं जिह्वा मृदुतना शुभे ॥८६॥ अनालालक संबद्ध कुंचि
तानंत मूर्धजं ॥ ललाटं नलपीलाभं श्रवणेंद्रिय नाजितं ॥८८॥
सम भ्रु मन्मथाकान प्रतिमा प्रतिम प्रभं ॥

यस्या: पादतले नेखासा भवे क्षितिपांगना ॥ केशा अलिकुलच्छाया:
सूक्ष्मा: स्निग्धा: सुकोमला: ॥ किंचिदाकुंचिताग्राश्च कुटिलाश्चा
ति शोभना: इति लक्षण शास्त्रं ॥ ललाटं लक्षयति ॥ अनालेत्या
दिना ॥ सार्द्धपद्येन ॥ अनालालक संबद्ध कुंचितानंत मूर्द्धजं ॥
ललाटं नलपीलाभं श्रवणेंद्रियनाजितं ॥ सम भ्रु मन्मथाकान
प्रतिमा प्रतिम प्रभं इति ॥ सम भ्रु समे भ्रुवौ यस्य तत् सम भ्रु
वनकालाहि समाकृति सम भ्रु ॥ मन्मथाकान प्रतिमा प्रतिम प्रभं॥
मन्मथाकानस्येवाकानो यस्या: सा मन्मथाकाना सा च सा प्रति
मा च मन्मथाकान प्रतिमा तस्या: प्रतिमा प्रभा यस्य तत् ॥
मन्मथाकान प्रतिमा प्रतिम प्रभम् ॥ यद्वा मन्मथस्य आकान: ॥
आकनण माह्वानं तस्य प्रतिमा सदृशी अप्रति प्रभा यस्य तत्तथा
इति अर्थ: ॥ अनाला: कुटिला: तेच ते अलकाश्च अनालालका: ॥
तै: संबद्धा: कलिता: ॥ तथा अनंताश्च ते मुर्द्धजाश्च अनंत
ते मुर्द्धजा: ॥ कुंचिताश्च ते अनंत मूर्द्ध जाश्च ते तथा अनालाल था
क संबद्धा: कुंचितानंत मूर्धजा यस्य तत्तथा ॥ श्रवणेंद्रियरा
ज जितं नलपीलाभं नलफलकाभं ललाटं ते विनाजिते इति यो
जना ॥ कंठ: सूर्यांशु सदृश: तांबूलनसदर्शित: ॥ इति ॥ कंठमि
ति पाठेन पुंस्त्वमार्षं ॥ स्थिनात्रिनेखा सुभगोपपन्ना स्निग्धासु
मांसोपचिता सुवृत्ता ॥ नचाति दीर्घा चतुनंगुला च ग्रीवा च

भ·पु· दीर्घा भवतीह धन्या इत्युक्त लक्षणाः॥ अत्रेदं बोध्यं॥उध्द्रविवें ग्मा
स्मि बिंबभूत नश्मिगर्भाद्रुत जांबूनद पुन्तळिकाव भासमानप ६
द्मा नाव्यः संसृष्टा वाग्तेन स्मयश्च नाड्यश्च तेषां वियोगो याव
दिदं शनीनमिति श्रुतेः॥मत्या पुनस्ता च्छिनासं हतिर्ग्री वासेवकंठः
अतस्तद्वन्ते जिष्टत्व वृत्तत्वादिबा सादृश्यमिति यद्वा सूर्यांशुः
कौस्तुभः तस्य सदृशः सदृज तच्छि ह्मित त्वादितिअर्थः॥ भ चंपक
वत्नम कोमलांगल त्वान्तांबूलनसस्य क्षान त्वाल्लो हित्य द्वाना स्व
च्छत्वाद्वा तांबूलनसस्य दर्शितं दर्शनं यस्मिन्स तथा॥ यद्वा दर्शे
दर्शनं तत्संजातो स्येति वा इतच्॥८८॥

कंठः सूर्यांशुसदृशः तांबूलनस दर्शितः॥८८॥स्तनौ पीनौ
घनौ कुब्जौ ब्रह्मणा स्वादिता वुभौ॥ उदनं कदळी पर्ण सदृशं
नवनाभिकं॥८९॥ सूक्ष्मं त्रिवळि मध्यं ते नोमनाजि विनाजि
रु तं॥ नंभास्तंभसमाकान वनोरु युगळं नमे॥९०॥ पृष्टं ते वेदि
वद्भाति किं तेन सुकृतं कृतं॥ गमनं कनिनाजस्य गमनंच
विनाजते॥९१॥ पूर्वाजितेन पुण्येन लभ्यते सुकृतं विना॥
इतिसं भाष्य तां देवीं देवर्षिः पद्मसंभवां॥९२॥ अंतर्दधे
नानदस्तु पश्यतीनां मुहुर्मुहुः॥ संस्तुत्य कमलां देवीं म
नसाचिंतयत्पदं॥ मनसा वंदनं कृत्वा जगामचऋषिस्तदा॥९३॥
इति श्रीमद्भविष्योत्तन पुनाणे वेङ्कटगिनि माहात्म्ये
षष्टोध्यायः॥६॥ श्रीकृष्णार्पणमस्तु॥ हरिः ॐ

स्तनाविति॥ पीनौ पीवनौ॥ घनौ सान्द्रौ॥ कुब्जौ वामनौ॥ पुना
ब्रह्मणा स्वादितौ॥ नवनाभिकं गंभीन दक्षिणावर्त ना
भिकं॥ नंभास्तंभ समाकान वनोरु युगळं नमे॥ नंभास्तंभः
तत्समूलांकुन कंदः॥ तदाकान सम आकानो ययोस्तौ॥
तथा॥ तौच तौ वनोरू च तथा॥ तयोर्युगळं॥ पूर्वाजितेने
ति॥ एतदुक्तम स्त्री लक्षणजातं सुकृतं विना न लभ्यते॥
पूर्वाजिते पुण्ये सति नलभ्यत इति नलभ्यत एव। यदेतन्न
लभ्यते तत्सकृत बिनेति॥ कुवलय कुटजान्मतन तल

अ. पु. तंतुन पद्दानं पुष्कळक तैलं भंजनं तंतवः पंचतत्र केशवादि पंचमूर्तयः ॥ श्रीमद्वविष्योन्तन पुनाणवें कटगिरि माहात्म्य व्याख्याने कल्याणकांड दीपे किना त वर्तिकासंपादनं नाम षष्टोध्यायः संपूर्णः श्रीः ॥ वें. मा ६.

श्रीगुरुभ्योनमः ॥ हरिः ॐ ॥ देवायवेङ्कटपते सततंनमस्ते सेवापनेषु सुतनां कनकाकनाय ॥ दावानलाय महतेदनुजाटवीनां ॥ श्रीवासवक्षसि धृतोन्तमकौस्तुभाय ॥१॥ सप्तमे व्याख्येयानि व्याक्रियन्ते ॥ विवाहे चानित्यं विवाहात्मकं चनितं ॥ आचानश्चनितं वृत्तं चानित्यं चनितंच तत् ॥ इति वैजयंती ॥ श्रीगंधेत्यादि ॥ श्रीगंध लिप्तश्चासौ उद्यदनेक भानुसमानतश्च स तथा ॥ पूर्वेण संगमय्ये तद्विशदयति ॥ गर्जत मित्यादिना नदन्तिस्यंतेन ॥ गर्जतं गजनाजातं दृष्ट्वा पद्मावती मुखाः ॥ वरांगनाः ॥ प्रशस्तांगयोगाद्‌ंगनाः अंगात्कल्याण इति पामादित्वान्नः ॥ उत्तमस्त्री विशेषाः ॥ वनस्पतिं ॥ अपुष्पात्फलं न्यग्रोधाद न्यत्तमं वृक्षं ॥ उपाश्रित्य अवलंब्य ॥ व्यूहं ॥ पद्मव्यूहं कृत्वा ॥ नेत्रवर्त्मानि नेत्रच्छदान् ॥ निमील्य आकुच्य ॥ तत्र वनस्पतिमूले ॥ लीलाबभूविरे ॥ इतियोजना ॥ अयं भावः ॥ आनामस्यपनितः पनिखा वलय वप्र संक्रमे गजदुर्गमांतः प्रवेशत्वेपि ॥ वन गज दर्शन भीत्याध्वनो माभूदिति नेत्रनिमीलनं ॥ श्रीनिवास तुनगस्यतु संक्रमद्वाने णांतः प्रवेशः इति ॥ तथाप्यव्यवस्थित मतयस्त्रियइत्यत आह ॥ पश्येति ॥ पश्य । इति । इति च्छेदः ॥ उक्तेति शेषः ॥ वनगजोयं यथास्ति ॥ यत्रागच्छति ॥ यत्रगच्छति ॥ तंत्वं पश्यत्वं पश्येति पुनः पुनरुक्त्वा ॥ व्यूहं भित्वा ॥ पुनः पुनः बहिनागच्छन् ॥ पुनः पुनः दृष्ट्वा पुनः श्रयाः ॥ श्रयंत इति श्रयाः ॥ कर्तनि पचाद्यच ॥ पुनः पुनः वनस्पति मूलाश्रया अभूवन्निति शेषः ॥ दृश्येतीति पाठे दृश्यः ॥ इति च्छेदः ॥ अविभक्तिकः ॥ शरदुप धादि नार्हे हैत्यप् ॥ दर्शनार्ह इत्यर्थः ॥

हृनि: ३ॐ ॥ सूत: ॥ कन्यया जननं प्रोक्तं कुमानस्य विशेषत: ॥ सांगं
वदामि चानि त्र्यं विवाहं पुण्य वर्धनं ॥१॥ करींद्र संगेन समागतोहृनि
स्तुनंगमास्थाय वनांगनानां ॥ श्रीगंध लिप्तोद्य दनेक भानु समान
न: सा धुसमीपमाशु ॥ गर्जंतं गजनाजानं दृष्ट्वा पद्मावती मुखा: ॥
वनस्पतिमुपाश्रित्य तत्र लीना बभूविने ॥३॥ निर्मील्य नेत्र वर्त्मा
नि व्यूहं कृत्वा वनांगना: ॥ पश्येति पुननागच्छन्पुन दृष्ट्वा पुनश्च
या: ॥४॥ तदंतने ऽबला: सर्वा ददृशुर्हयमुन्तमं ॥ बालार्क सदृशा
कानं सर्वा भनण भूषितं ॥५॥ पुन्रुषेण समायुक्तं मन्मथाकान
(शोभितं) तेजसा ॥ तं दृष्ट्वा इभनाजोपि हयस्थं पुन्रुषोन्तमं ॥६॥

यद्वा दृश्येति इति समस्तं ॥ दृश्य: इति दृश्येति इति विग्रह: ॥
बुध्येति शेष: ॥ दर्शनार्हत्व प्रकानक बुद्धेत्यर्थ: ॥ अव्ययोन्तनपद: ॥
योजनात् क्त्वैव ॥ तत: किमभूदित्यत आह ॥ तदंतने त्यादिना
तेजसेत्यंतेन ॥ तदंतने तत्पश्चात् ॥ न्यवधानेन ॥ सर्वाभनण
भूषितं हयम् ॥ तत: किमभूदित्यत आह ॥ तमित्यादिना नद
न्नित्यंतेन ॥ इभनाजोपि ऐनावतोपि ॥ हयस्थं पुन्रुषोन्तमं ॥
पुन्रुषसानं ॥ तं ॥ श्रीनिवासं दृष्ट्वा ॥ यथान्यायं यथानाजो
चितं ॥ नमस्कृत्वा ॥ पुनतोन्य ग्भूय शुंडामुद्यम्य विदेकृत्वा ॥
तद्दन् ॥ हनेत्राही त्यर्थ सूचकं गर्जनं कुर्वन् ॥ विपिनं यथामन: जगा
मेत्यर्थ: ॥ तत: किमित्यत आह ॥ तं दृष्ट्वे त्यादिना बृवन्नित्यंतेन ॥ तं ॥
तादृशं गजत्रातानं दृष्ट्वा ॥ सर्वा योषित: ॥ विस्मयाकुल मानसा: ॥
अपूर्व नम्यदर्शनेन विकास विशिष्ट मनस्का: ॥ कनसंपुट मा
पन्ना: ॥ इदानी मागमन मित्येदनुचित मभूदिति कनसंघर्षणं
कुर्वत्य: सत्य: ॥ चकितात्म भयातुना: ॥ चकित मेवात्मा स्वनूपं
यस्य तच्चकितात्म तच्च तत् भयं च चकितात्मभयं ॥ तेनातुना: ॥
दं अभ्यंता: अभूवन्निति शेष: ॥ अत्रेषं हेयं ॥ भयलज्जा कंठाभि
न सकृन्निमीलनोन्मीलनावृन्ति: चकितं ॥ तदुक्तं ॥ मीलनोन्मी
लना वन्ति यत्र तच्चकिदं विदुनिति ॥ चकितं भयसंभ्रम इतिचा
न्यत्र ॥ भयं चापनिचित पुन्रुषागमतात्पद्मामप हनेदित्यनर्थाशं
कात् ॥

नमासमामिमां कन्यां घटयाशु वनान्तरे ॥ जन्मांतरार्जितेनैव मत्पुण्येनापि लभ्यते ॥२०॥ मत्पुण्यं पक्वतां जातं दृश्यतेन सुलोचने ॥ मानवं देहमासाद्य तां कन्यां यः पुमान्स्त्यजेत् ॥२१॥ विना जडमतिं लोके अन्नपानविवर्जितं ॥

अथ बकुला ॥ हे श्रीनिवास पनमाभनस्तव किं तया नाजकन्यया विरक्तमार्गमवलंब्य तच्चिंतां त्यजेत्यत आह ॥ मानवमिति ॥ हे सुलोचने ॥ इह लोके ॥ नवं सुंदरं तरुणं मानवं देहमासाद्य जीवत्सु जनेषु ॥ जडमतिं ॥ इष्टं वा निष्टं वा सुखदुःखे वा नवेत्ति यो महात् ॥ तूष्णीकः पनवशगः स भवति जडसंज्ञितः पुरुषः ॥ इति उक्तजडस्येव मतिर्यस्य स तथा तं ॥ अन्नपानविवर्जितं ॥ पीयत इति पानं जलं ॥ अन्नंच पानंच ताभ्यां वर्जितः ॥ तं निनाहानिणंच विनानसन्नः ॥ अन्नमाददानो जलं पिबन् यः पुमान् तां कन्यां त्यजेत् कोपि मा त्यजेदित्यर्थः ॥ आंतनस्तु जडमतिं जडं अतिं अतिक्रांतं जडाभिन्नं ॥ अजडमतिं वृत्तिज्ञानशून्यं इति वा ॥ अन्नपानविवर्जितं ॥ निनन्नं ॥ मानवं मया लब्धा नवं स्तुतं ॥ जगन्मोहनसौंदर्यलीलाविग्रहत्वात् नवं नूतनं ॥ देहं ॥ पूर्णषाड्गुण्य विग्रहं मा मां विना यः पुमान् वर्तते स तां कन्यां त्यजेत् इत्यर्थः ॥ अहं चानन्यादृशः ॥ तत्कथं तां त्यजेयमिति भावः ॥ साक्षी चेताकेवलो निर्गुणश्च ॥ अन्यो निनलोपि बलेन भूयात् ॥ दिह उपचये ॥ अयं भावः ॥ विरक्तमार्गे ॥ गत गोष्ठीं प्रविष्टः तद्वार्तां परित्यज्य भाषस्वेति ॥ अथ बकुला ॥ हे वेंकट वैकुंठाद्लक्ष्मीके निवसत स्तव स्वानंद तृप्तस्या भोगेनैवाब्दसहस्राणि बहूनि गतानि वनाद्दर्शनादानभ्येति जीवंतमानंदो नरं वर्षशतादपीति गाथानुसारेणोक्तं स्वतंत्रस्थानं लब्ध्वं विष्णुसदने पाचकी चाहं तव सेवकास्मि तथाच वनाद्दालय सिद्धान्नभोजनं वल्मीके निश्चिंत शयनं ममचैकः पुत्र इति अथेवं सुखजीवने किमलं बुद्धिर्नास्ति अल्पसंतोषिणोपि लोके सुजीवंतीत्यत आह ॥ किमल्पेनेति ॥ किमल्पेनेह जीवेन कार्यं जीवेन मे सखि ॥ ६ ॥ किं ॥ अल्पे ॥ न ॥ अल्पेन ॥ इह ॥ जीवेन ॥ जीवे ॥ न ॥ मे ॥ नमे ॥ सखि ॥२२॥

भ॰ पु इति च्छेदः ॥ हे सखि ॥ धनिष्ठी सखि अल्पे ॥ भाविभोग्या धिदिना ऌब्धे पाद वें॰ मा॰
गत मात्रे ॥ उद्गकेवल निवेशनेमे ॥ मया ॥ किं कार्यं ॥ कार्यं न ॥ नास्तीत्यर्थः ॥ ६
दातुस्तोषोपि नेति भावः ॥ ३ ॥ हे सखी स्निग्धे अल्पेन ॥ प्राण धानणमात्रो
पाय भूतेन जीवेन ॥ जीवनं जीवः ॥ हृलश्चेति घञ् ॥ जीवनेन भिशान्न वृ
सा नित्य या च्तयामृत जीवनेन ॥ मे ॥ अंजना चले पद्मा सनस्तीने ऽनेक
सहस्राब्दं योगतपः कुर्वतः ॥ कार्यं न ॥

> किमल्पेनेह जीवेन कार्यं जीवेन मे सखे ॥ २२ ॥ घंटयाशु वनांगीं ताम
> काश नृपनंदिनीं ॥ तां विना न हि जीवामि सत्य मित्यव धानय ॥ २३ ॥
> ता डितो हं शिलावर्षैर्हतोऽश्मो पि वनान्तने ॥ मज्जीवनं तदर्थाय
> जनितं वेङ्कटाचले ॥ २४ ॥

एता वत्मात्रेण जन्मनः साफल्यं नास्तीति भावः ॥ ३ ॥ हे सखी मत्मात्
समान तया जनैर्ना ख्यायमाने बकुळे अल्पेन ॥ मातृमात्र न स्निग्धेह
न तक्रेश दापिना मात्र नानंदिना ॥ जीवेन जीवत्मात्रेण । पुत्रेण ॥ ते ॥
इह ॥ लोके ॥ किं कार्यं ॥ सतिवा किं ॥ किं वासति ॥ तस्मा देतावंतं काले
कथं चित्प्राणा धृताः ॥ एतदुपनि यमापूर्वं नाहमिह जीवे वर्तयामि ॥
अतस्त्वां नमे ॥ यत्रवा गमिष्य इति भावः ॥ ३ ॥ हे सखि ॥ अस्यकांत
स्येयं कन्या समानेति ख्यायमाने पद्मे मम किं नस्नेहः ॥ इति मोहः ॥
अतो मज्जन्म साफल्याय तव बीन सूखाये त्यादि सर्वकार्य सिद्धये
वनांगीं ॥ चूडामण्या द्यलंकृत नील नागा भवेणी भूषित मस्तकां ॥
अद्रि बर्हीं ॥ योगिविचिंत्य नितं बितीं सुभगां आकाश नृपनंदिनीं
अंबन नाज सुतां ॥ आशु घटय ॥ तां विना नहि जीवामि सत्य मि
त्यव धानयेति मनोगतं पद्मृतन माहेत्यर्थः ॥ अदृष्ट म स्ति प्रयत्न
स्त्वदायन्त इति भावः ॥ ६ ॥ अथाभिमाना द्वचन्मह्यो न्मह्य सम
स्थित्या चैन्तेवं त्रिविधां लोकवृन्तनीति मनुसृत्य यैकीर्षितं
साधयन् तवदाद्यांनीति मनसृत्य मोहात्प्रबुद्ध इव पनिदेवमति ॥
तां विनेत्या दिना कृतो विधिनि त्यंतेन ॥ तथाहि ॥ अथ श्रीनिवासः ॥
हेसखे अहोमे महीयसी विषम सुखे दुनाशा मम दुर्दैवं ईषदपि
सुखं न सहते ॥ तथाहि ॥ पूर्वं भार्यया कलहः ॥

भ. पु. अथ वैकुंठाख्य स्वदेश त्यागः ॥ गिरौ वल्मीकवासः ॥ तत्र कामधेनु वें. मा
प्रसादेनैष ज्जीवेयमिति समये शिनसि कुठानप्रहानएव ॥ अथेदानीं ६
वदीयादनेषैष ज्जीवेयमिति समये देवमाया दर्शितं ॥ इदंचन सुख
या मातमिति जानामि ॥ तत्कथं ॥ साम च्चिन्तमात्र मपजहान ॥
न संभोगानुकूला ॥ मद् दैवात् ॥ ततः किमित्यत आह ॥ तां विनेति
तस्मान्नत दर्शने नैन मत्सुखायागतमिति भावः ॥ किंचाहं तया
शिलावर्षैः ताडितः ॥ अश्वोपि हतः गतः ॥ मज्जीवनं तदर्थाय
जनितं वेंकटाचले ॥ तदर्थायि ॥ ये ॥ शिलाप्रहानोऽश्वगतिः प्राण
धानणा धैर्य भ्रंशश्चेति त एव अर्थः प्रयोजनं तस्मै ॥ तदर्थाय
उक्रान्तर्यान्तु भावार्थ गेयेति यावत् ॥ वेङ्कटाचले ॥ ज्जीवनं जनि
तं निर्मितं विधिनेति संभावयामि ॥ २५ ॥ किंच पुत्रोपीदानीं
मम प्रतिकूल इत्याह ॥ पुत्र इति ॥ ~~संभावयामि~~ कुत इत्यत आह
किमिति ॥ पूर्वजन्मनि ॥ मयाकृतं कर्म किं वा नाहं जाने वैनकृत्स
एव जानीयादिति ॥ भावः ॥ तथा भूतेन विधिना तुभ्यं किमप
ष्टि नाद्भुमित्यत स्तमुपालंभ्याह ॥ दृष्टीति ॥ दृष्टिभ्यां हीनः दृष्टिहीनः
तेन विधिना ॥ वना देवमाया कन्यकामदावास भूत वेंकटाचलसमीपे
नानायणपुने ॥ निर्मिता इत्यर्थः ॥ अयं भावः ॥

---

पुत्रो मे वैनमापन्नः किंकृतं पूर्वजन्मनि ॥ दृष्टिहीनेन विधिना
निर्मिता कन्यकावना ॥ २५ ॥ अतोऽयसेन भूयादिति मे निश्चिता
मतिः ॥ किं दृष्टं ब्रह्मणा पूर्वं मत्पापं दोनदर्शनं ॥ २६ ॥ तस्मात्प
मनुसृत्यैव घटनं नकृतो विधिः ॥ मद्भाग्यस्यो हनिस्त्वं हि
सहायं कुरु मंगले ॥ २६ ॥

---

यदि विधेः दृष्टी स्यातां तर्हि स्वसृष्ट कन्या सौंदर्यं पश्येत् ॥
अथानया मोहितोऽयं श्रीनिवासः स्मनपीडां प्राप्नुयादिति
जानीयादेव ॥ ज्ञातेच न निर्मायात् ॥ निर्मितवांश्चायं ॥ अतो नज्ञा
तवान् तदभावः ॥ कुतः ॥ दर्शनाभावात् ॥ सोपि कुतः दृष्ट्यभावा
दिति समाधेयं ॥ नहि तस्य दृष्ट्यभावः संभवति ॥ सृष्ट्यभाव
प्रसंगात् ॥ अतस्तौ च दृष्टी ॥ अतोस्ति दर्शनं ॥ अतोस्ति ज्ञानं ॥

अ॰पु॰ जानन्नपि मत्पीडाकरं निर्मितवानिति ॥ इत्थमपनाद्रमिति ॥२९॥ धर्मवसि वें॰मा॰
तमनर्थमाह ॥ अनास्येति ॥ यावदाप्यं वल्मीके कथं चिन्नीव तेंतेऽन्
यासेनमनणं भूयादिति मे मतिर्बुद्धिर्नितावन्निश्चिताऽभूत् ॥ इदानीं ७
तत्रास्थैर्यं नष्टमिति भावः ॥ अथ बकुला ॥ विधिना तावद्भूनाकन्या
निर्मिता ॥ तन्निर्माणसमयमेव चोळनागकन्ययोः संमेळनमार्गइव
कुतोऽनया तव नकृत इत्यत आह ॥ किं दृष्टं इति ॥ घोनदर्शनं घोनं भमानकं
दर्शनं यस्येत्यादि ॥ व्युत्पत्या घोनदर्शनं भयंकरनाद्रष्टुमशक्यं ॥ पूर्वं
पूर्वार्जितं ॥ किं मादृशं ॥ दृष्टमासीत् तत्पापमनुसृत्यैव ॥ घटनं तया
मम मेळनमुद्दिश्य ॥ विधिर्विधानं ॥ मार्गः ॥ नकृतः इत्यर्थः ॥ छ ॥ अथै
वमापन्नः श्रीनिवास आपदि धैर्यमवलंबतामिति नीतिमनुसृत्याह ॥
मद्भागस्थ इति ॥ पूर्वकर्मनरूपवती तरुणीकामः पुत्रो विधिश्चेत्ते तत्सर्वं
स्तु अस्तु प्रतिकूलं ॥ असाहाय कार्यवीर्ये हर्यनुग्रह एकोऽस्ति ॥ तत्कथ
मेतादृश्यत्मापथ्यपि त्वमेकाम कार्यसाधिका हर्यनुग्रहादसि ॥ य
तो मत्कार्यभागस्थो हरिः त्वं त्वमिसन्निहितः अतो हे मंगळे ॥ मन्चि
कीर्षितं कार्यं विघटकदुनितध्वंसके हे ॥ मंगळे ॥ पश्चात्कल्याणे सहायं कुरु ॥
इत्यं अवरुह्य ॥१॥ छ ॥ अथसमस्थिस्सायया ॥ छ ॥ तथाहि ॥ अवधानेयसं
तेना दृष्टमस्ति यत्नः कर्तव्य इत्येतत्प्राप्तं ॥ अथबकुळा ॥ हे श्रीनिवास निर्धन
स्य सधनकन्यालाभो न दृष्टचनः ॥ कथं तत्र यत्न इत्येवं बकुळयोक्ते ॥

नचकार्षीर्यदाबाले तदामे मरणं ध्रुवं ॥ मरणे जीवनोपायं
येकुर्वंति नरोत्तमाः ॥२८॥ ते दिवं यान्ति यानेन पुण्यमार्गे
ण कन्यके ॥ इत्थं धर्मार्थमासाद्य धर्ममार्गमुपाश्रय ॥२९॥
किमुक्तेन विशेषेण प्रियस्तुत्याश्च संगमे ॥

श्रीनिवासः ॥ सच दृष्टचनः ॥ च्यवनस्य शर्यातिकन्यालाभ इत्याह ॥
अथ बकुळा ॥ तत्रासीद्द्विवकृतो तेत्रोद्धेदन लक्षणः कन्यापनाधः कन्या
घटन हेतुर्लौकिक व्यवहान संदर्भ इति चेन्तह्यत्रापि तादृशं द्वयमस्ती
त्याह ॥ ताडित इति शिलाप्रहानोऽश्व हननं चेत्युभयं तादृशं ॥ अथ बकु
ळा ॥ तया बल्या ताडितस्य बलवस्तव पुंसः प्रतिहर्तुं नोषः कुतो
नायातः ॥ किंच च्यवनऋषिनपि सापनाधां नाजकन्यामप्य सहवान् ॥

भ·पु· अतस्तां जीवग्राहं गृहीत्वा कुतो नायात इत्यत आह ॥ मज्जीवनमिति ॥ वें·मा
तदर्थाय ॥ तस्याः पद्मया अर्थः अभ्यत इत्यर्थः यो ह्रद्यः तस्मै तदर्थ ८
मिव वेङ्कटाचले मज्जीवनं मद्वर्तनं ॥ जनितं जातमिति जानामि ॥ त
द्धिताकनष्ठो वेङ्कटाचले मज्जीवनं व्यर्थमेवेत्येवं सानुराग लक्षा
क्षयनंतनमेव मम तस्यां दृढमोहो जात इत्यर्थः ॥ अयं भावः ॥ तादृ
श्य नया ताडितस्यापि मम प्रतिहन्तुं नोषो नायातः ॥ कुतः ॥ तस्यां
समुत्थितेन संभोग जानंदाभिलाषात्मकेन कामेन सद्धिनकद्भत्वात् ॥
तदुक्तं सद्धिय च्छति मे क्रोधं त्वयि कामः समुत्थित इति ॥ किंच
तस्याः कन्यत्वात् तत्पितृनाहः साधुत्वाद्दाशसितकार्यानुकूला
पनाधासंजनाद्धेतोश्च क्षांतं ॥ जीवग्राहं गृहीत्वा नयनं तु नसनसः
संदर्भः ॥ मुद्धप्रसक्तेः ॥ तत्खेदाश्च ॥ तस्यां निबद्धकामस्य ममानु
क्रोशात्स्नेहाच्चेषदपि तत्क्लेशासहिष्णुत्वान्न जीवग्रहं गृहीता ॥
तदुक्तं ॥ वामः कामो मनुष्याणां यस्मिन्किल निबध्यते ॥ जने त
स्मिं स्त्वनुक्रोशः स्नेहश्च किल जायत इति ॥ यद्वा हे जनि स्व
स्नुषे ॥ तदर्थाय ॥ सेवार्थः तदर्थः ॥ तस्मै पद्मा लाभायेति यावत् ॥
यः पनिवाय ॥ तं वेंकटाचले मज्जीवनं मद्वर्तन साधनं ॥ तव जनितं
च संजातस्नुषं च विद्धि ॥ जामते पौत्रो स्यामिति ॥ जनीः अच् गौना
दिः समाः स्नुषा जनीवध्व इत्यमनः ॥ अनेन श्वश्रूर्भूयासमिति
प्रलोभनं कृतं भवति ॥ हे जनि इति मोहः इति ॥ तर्हि तव मया त
स्यामनुकंपास्ते हो ॥ तथात्वयि तस्यास्तो कुतो नस्त इति चेत् ॥ शृ
णु ॥ मया तावद्दीषन्नीति पथोह्यतिक्रांतः ॥ सोपि कुतः कामचोद
नात् ॥ कामातुनाणां नभयं नलज्जेति भावः ॥ स किन्न तव पुत्र इ
त्यत आह ॥ पुत्र इति ॥ पुत्रोपि पितुः ममैव वैनमापन्नः ॥ तत्कुत
इति चेत् तत्राह ॥ किमिति ॥ मया पूर्वजन्मनि कृष्णावतारे कृतं
स्वयंकृतं ॥ अपराधं ॥ किं ॥ किमिति ब्रूयामि इत्यर्थः ॥ इदमत्र
हृदयं हरेणांगीकृतः कंदर्पो मानः हरं प्रति द्वादशाब्दं तपस्तप्त्वा
गीकृतः ॥ समानो मामेव पीडयतीति मया वक्तुं नशक्यं हरेो हस
ति ॥ लज्जाहेतुत्वात् किमिति ब्रूयामिति ॥ अथ श्रीनिवासः ॥ अहो
किमियं भ्रांतिः मैवं लोके कनीयसा पुत्रेण अपराधे मोहाद्येन केना
पि संबंधेन पितरो ज्येष्ठे पर्यवसाययंतीति लोकस्वभाव नीति

भ॰ पु॰ मनुस्तत्य जेष्टपुत्र मुपालंभते ॥ दृष्टिहीनेनेति ॥ काम: किं कुर्यात्॥ वें॰ मा॰
यत्नैकांते तरुणी तरुण मेलनं सतस्य विद्वान देशः ॥ सस्वभावादेव सर्व ७
जन वैनी विज्ञेन मित्रवैनिणा मित्युक्तेः ॥ परंतु विधे दृष्टिहीनस्त इति॥
नन्वकुशलस्यायं यत्नः प्रहानपर्यंत इत्यत आह ॥ अनायासेनेति॥ आ
यासं विना चोज नागकन्य यो निव विधि कृत घटन मार्गेणैव भूयादितिमे
ति श्चिता मतिः अतस्तत्पर्यंतः प्रयत्नः कृतः ॥ विधिना तन्मार्गः कुतो
न कृत इत्यत आह ॥ किं दृष्टमिति ॥ मत्कर्मणा ब्रह्मणा घटन मार्गेण
कृत इति भावः ॥ एतदुपनि पूर्ववत् ॥ अतोऽदृष्ट सद्भावास्पनाध
लक्षणा न्याय संदर्भाच्च त्वया यत्नः कर्तव्य इति सम स्थित्या ॥२॥ छी॥
आनृद्य यथा ॥७॥ पनाक्रमे ॥ तथाहि ॥ तां विना नहि जीवामि सत्य मित्य
व धान येति ॥ वस्तु तस्तु हे बकुले मां मेवं जानीथाः ॥ स्वानंद तृप्तस्य
स्येंद्रिना नभणास्य स्वनतस्य पनमात्मनः किंतया कुटिल मनीषया पश्यया॥
तथापि तां विना अनानीयतां कृतापनाधां पनित्यज्य नहि जीवामि सत्य
मित्यव धानय कुत इत्यत आह ॥ ताडित इति ॥ अहं तया ताडितः ॥ अ
श्वो पि गतः ॥ स्त्रिया ताडितस्य मेऽकीर्तिर्जाता स्त्रियस्तावदंगुलि घट्ट
टनेन तुच्छी कुर्वंति दाना श्रपह सिष्यंति सर्वे घातस्तु जीविता मित्युक्तेः॥
अतस्तच्छांत्यै येनकेनाप्युपायेन सा आनेया तदिच्छाभावे किं तदा
नयनेनेत्यत आह ॥ मज्जीवन मिति ॥ तदर्थाय ॥ तयोः शिला प्रहाना श्व
गमन दुःखा कीर्त्योर्निर्थाय निवृत्तये ॥ वेंकटाचले ॥ मज्जीवनं मद्वर्तनं
पुनः जनितं विद्धि ॥ सकृद्दैवादपायेन गतो मान उपायेन संपादनीयः॥
तादृशोऽपायः कुतः कृत इत्यत आह ॥ पुत्र इति ॥ यतः स्वगृहे पूजितां
वेदवतीं भुव्य वतानयामासेति भावः दैवात्प्राप्त मनयं अंते पनाक्रमा
त् समीकनिष्यामि परंतु प्रथमं सा धुषु सामोपायः कुतः कृत इत्यत
आह ॥ पुत्र इति ॥ यतः स्वगृहे पूजितां वेदवतीं भुव्यवतानयामासेति
भावः दैवात्प्राप्त मनयं अंते पनाक्रमात् समीकनिष्यामि परंतु प्रथमं साधु
षु सामोपायः ॥ अतस्त्वं प्रयतेति विधि नित्यंता खंडार्थः ॥ शेषं पूर्ववत् ॥२७॥
मात्रादि बंधुजनकृत्यं नपन जन साध्य मित्यत स्त्वमेव सर्वं मम देवि स
त्यं इत्याह ॥ त्वामित्यादिना ॥ गवानां कोटि सहस्राणा मिति ॥ व्याकृतं पू
र्वार्ध ॥ तथेत्यावर्तते ॥ तस्य सुवर्णेत्यादिना न्वयः ॥ सहस्राणा मिति
तस्यार्थः ॥ सुवर्ण तिलदानानां ॥ सुवर्ण सम तोलित सुवर्ण मिश्र तिल
दानानित्यर्थः ॥

भ.पु मांगल्य बंधनं मंगलमेव मांगल्यं ॥ स्वार्थे ष्यञ् कन्यकाणामित्यर्थः ॥ वें.मा ६
तस्य निबंधनं ॥ तन्निश्चयानुकूलं कर्म तथाचेत्थं योजना ॥ कोटिसह
स्राणां गवां ॥ यद्दानं तस्य ॥ तथा ॥ तथाश्वानां सहस्राणां यद्दानं ॥
तस्य च ॥ तथा ॥ सुवर्णतिलदानानां च मांगल्यबंधनं सममिति
समवत् ॥ तदुक्तं ॥ मातापितृविहीनं तु संस्कारैर्द्वाहनादिभिः ॥
यस्थापयति तस्येह पुण्यसंख्या न विद्यत इति ॥ सा कन्या किं बाह्या
भ्यंतर लक्षणसंपन्ना कच्चिदित्यत आह ॥ कन्यामिति ॥ कन्यां दृष्ट्वा
त्वया लक्षणाढ्याः पत्नी सा यां बाह्याभ्यंतर लक्षण गुणाभिः संतोषं लभसे ॥ तव माया प्रदर्शिनीति ॥ तव देवस्यापि मायाप्रदर्शिनी ॥ व्यामोहनकारी देवमाया पद्मावती नाम्नी कुत्रास्त इत्यन्वयः ॥ तं मार्गं तद्देश प्राप्ति हेतुं पंथानं वद हे करुणानिधे तं देशं गच्छामि ॥ यद्वा जगदाधान तव चिन्तापहारिणी लक्ष्म्यन्या कुत्रास्ते न कुत्रापि ॥ ते ॥ तव चिन्तापहरणोपायभूतं मार्गं वद गच्छामि अव गच्छामि इति ॥ तन्मार्गे भवन् भवेत ॥ लक्ष्मी समगुणां तदाशयेन ॥

त्वं मे माता पिता देवो भ्राता मातुल एव च ॥ २० ॥ त्वं प्रह्लादः त्वमक्रूरः त्वं ध्रुवस्त्वं गजेश्वरः ॥ त्वमुद्धवोसि मे भक्तस्त्वं किरीटी द्युमांस्तथा ॥ २१ ॥ अजामिलो द्रौपदी च भक्तो मे त्वं विभीषणः ॥ त्वां दृष्ट्वा मे मनो हर्षं गच्छति स्म निरंतरं ॥ २२ ॥ अजामिलो द्रौपदी च मद्दुःखव्यपनाशाय निर्मिता हरिणांगना ॥ गवां कोटिसहस्राणां हयानामयुतं तथा ॥ २३ ॥ सुवर्णतिलदानानां समं मांगल्यबंधनं ॥ कन्यां दृष्ट्वेति संतोषं लभसे नात्र संशयः ॥ २४ ॥ इति तेन समाहूता बकुला वाक्यमब्रवीत् ॥ बकुला ॥ कुत्रास्ते जगदाधान तव माया प्रदर्शिनी ॥ २५ ॥ तं मार्गं वद गोविंद गच्छामि करुणानिधे ॥ सा का पूर्वं किमर्थं च कन्यका जनिता भुवि ॥ २६ ॥

प्रकृतकार्योपयोगि देवनरूप पूर्वानुबंधाशयाच्च पृच्छति ॥ कासेति ॥ सा तवापि मनोहरा कन्या पद्मा पूर्वं पूर्वजन्मनि का किं स्वरूपा किं नाम्नी किमाचारा किमर्थं कस्मै प्रयोजनाय भुवि जनितास्तीति शेषः ॥ विनं चेश विनतां घ्रि सनीरुहः ॥

भ·पु ब्रह्म रुद्र वंदित पादकमलः॥ अत८ धनश्री सखीं बकुळां प्रति॥ मंदवचनं॥ वें ॥
हर्षकानि वाक्यं उवाचेत्याह॥ उवाचेत्यादिना॥ शुभां शृण्वतां शुभकारिणीं॥ ८
जनिं उत्पत्तिं प्रादुर्भावमिति यावत्॥ अवतारमुपागतः॥ अहमिति शेषः॥
वामनानुगुण्यात् सपितुर्वचनमिति॥ सोऽहं पितृवचनं श्रुत्वा भार्यया
सीतया भ्रात्रा लक्ष्मणेन च सह दंडकारण्यं॥ अगो ध्यायया आगतः॥ पुना
रिति॥ पूर्वमेव॥ विवाहात्पूर्वमेवेति यावत्॥ कृत इतेना॥ लोककंटकः॥
रावणो राक्षसः॥ लोक भर्तुर्मम सतीं हृत्वा लंकां गंतुं अवर्तत आसीत्॥
अनरण्यागमनं पुनरनुकूलं जातमिति भावः॥ तत्रापि वने सीतया प्रेरितो
लक्ष्मणोनुजोपि सीताचोदनेन पूर्वमेव वनं गतमग्रजं मां अनुप्राप्तः
सीताप्रेरणां तादृशमिति भावः॥ तत्कालं॥ तं च्या मुंकालं च॥ तत्कालं॥
तिनर्गकं॥ कालमाकांक्ष्य नाक्षसेंद्रः सनावणो विदेहपुत्रीं च्छायासीतां
विमानमानीय विहायसा गंतुं उत्पपात॥ तदा जटायु युद्धे नये भग्ने
सीता माचकर्ष तदा सार्त्तनाद मकरोत्॥ इति मध्ये वाक्यशेषः॥ तदा
र्तनादं आर्तैः पीडया अयं आर्तः सन्नासी नाव श्रांतं ध्वनिं श्रुत्वा सु
स्वनं नोदनं॥ वनांतरस्था॥ तद्वन समीपान्यवने विद्यमानाः॥ तद्वनस्था
रावण भयान्न पनस्पंदिने॥ न यैव नामाम्पणोन्कैः॥ तमुग्रतेजःकर्माणं
जनस्थान रुहाद्रुमाः॥ समीक्ष्य न प्रकंपते नप्रवातिच मारुतः इत्यादि
२१ ना॥ विदिताः॥ संजात संविदः॥ वनौकसः॥ वनदेवता गिरि नदी वृक्ष पक्षि
मृगादयः॥ विचिक्रुशुः॥ क्षिप्रं नामाम्रंस ध्वं सीतां हरति रावण इत्या
येव माह्वया मासुः॥ ४२॥

तद्वृत्तमखिलं ब्रूहि सत्येन मम केशव॥ तयाऽऽपृष्टो जिनं शु विनतांघ्रि
सनो नृहः॥ ३७॥ उवाच मंदवचनं बकुळां धनश्री सखीं॥ शृणु बाले
पुनावृत्तं पद्मावत्या जनिं शुभां॥ ३८॥ त्रेतायां नामनरूपेण अवतार
मुपागतः॥ स पितुर्वचनं श्रुत्वा दंडकारण्य मागतः॥ ३९॥ लक्ष्मणेन
सह भ्रात्रा सीतया भार्यया शुभे॥ पुनातु रावणो नाम राक्षसो लोक
कंटकः॥ ४०॥ लोक भर्तुः सतीं हृत्वा लंकां गंतुमवर्तत॥ लक्ष्मणोप्य
ग्रजं प्राप्तः सीतया प्रेरितो वने॥ ४१॥ तत्कालमाकांक्ष्य रावणा क्षसेंद्रो
विमानमानीय विदेहपुत्रीं॥ तदार्त्तनादं विदिता वनौकसो विचक्र
शुस्तत्र वनांतरस्थाः॥ ४२॥

तद्वाक्यमाकर्ण्य हविर्भुजोपि पाताळलोकादपगाद्धुनातळं ॥ समायातं दुनाधर्षं आकर्षं तंच जानकीं ॥ संभाष्य रावणं क्रूरं पाताळमुपगम्यच ॥५३॥
रावणेन सुपापेन सहितः सीतयातया ॥

तद्वाक्यमाकर्ण्य हविर्भुजोपि पाताळलोकादपगाद्धुनातळं ॥ तत्वाभिमानितया सन्निहितत्वात् ॥ तद्वाक्यमाकर्ण्य ॥ तेषां वनदेवतादीनां वाक्यं श्रुत्वा ॥ हविर्भुजः ॥ मूलविभुजादित्वात्कः ॥ अग्निः पाताळलोकात् अपगात् ॥ अड भाव आर्षः अपसर्वं परिवृज्य आपेत्यर्थः ॥ यद्यपि अग्निहोत्र शालायामेवाग्निरस्ति तथापि पाताळाग्निरूपोग्निः रावणस्येंद्रजितश्च मानणहोमाधिष्ठान तया परमभिन्नं ॥ किंच तस्मिन्दिने पाताळाग्निवासः ॥ अपिच वेदवत्यां रावणमानणाय पाताळगतावेव स्वदेहहविर्होमः ॥ उक्तंच पाताळे लंकागमतांमे कांशेन वेदवत्यास्थितिः ॥ अत एतैः ॥ कारणैः पाताळादागमनं इतिबोध्यं ॥ शालास्थोग्निर्मध्यदृष्टिरूदासीनः पाताळाग्निस्तु शुक्रवन्मित्रं ॥ इति ॥ आगतः किमकरोदित्यत आह ॥ समायातमित्यादिना ॥ सम् नयादिसन्नाहयुक्त तयायातं लंकाया आगतं ॥ जानकीं छायासीतां ॥ आकर्षं तं दुनाधर्षं च ॥ दुरग्राह्यमपि ॥ संभाष्य ॥ हे रावण दानीं परम मित्रेण मया तव वश्यमुपदेष्टव्यानि वचनानि संति ॥ अत्र क्षणं स्थातुं अनुचितं अतो ममावासं पाताळमागच्छेत्येवं क्रूनमपि संबोध्य ॥ तया ॥ या ॥ सुपापेनाति पापेनरावणेन तथा रोपिता ॥ तया ॥ वनगमनोपक्रमे निज शीतया प्रादुर्भूत देवमाया सीतया इदानीं निर्मिता छाया शीतात्मिका तया शीतया रावणेनच सह पाताळमुपगम्येव ॥ रावणं बोधयामास नाना वाक्यगणैः सहेति ॥ नाना वाक्यगणैः ॥ रामाय रामभद्राय रामचंद्राय वेधसे ॥ रघुनाथाय नाथाय सीतायाः पतये नमः ॥ इत्यादि वेदवाक्यैः सुलभाः पुरुषाराजन् सततं प्रियवादिनः ॥ अप्रियस्यच पथ्यस्य वक्ता श्रोताच दुर्लभः ॥ जीवितं सुखंचैव राज्यं
वि चैव सुदुर्लभं ॥ यदीच्छसि चिरं भोक्तुं माकृथा रामविप्रियं ॥ इत्यादि मारीच माल्यवत् कुंभकर्ण विभीषणादिकाकथ मूलभूत वाक्य समूहैः ॥ सह ॥ नाना सुहृद्बंधु सुभ्रातृ गुरु मित्रत्वाद्यनेक प्रकारेणानेक क्लेश स्थानं प्रदर्श्य हितमुपदिदेश ॥ तथापि रावणस्यायं सहजो दोषः ॥ स्वस्माज्ज्ञानं
नि ज्ञानिभिः पौनःपुन्येन कृत स्यापनिग्रहः ॥

भ·पु·

रावणं बोधयामास नाना वाक्य गणै: सह ॥५४॥ इयं जनक पुत्रीच
विष्णु पत्नी जनेश्वर ॥ राघवस्त्वयाद्य शत्जानकीं मम सन्निधौ ॥५५॥

वें·मा·
७

द्विधा भज्येयमप्येवं न नमेयंतु कस्यचित् ॥ एषमे सहजो दोष: स्वभावो
दुरतिक्रम: इत्युक्ते: ॥ अतो नतत्पनि जगाद ॥ अथाग्निनाह ॥ तर्हि तथाऽ
स्तु यदर्थं मयात्वं पातालमुपानीत स्तदर्थं मंतना गच्छेति तयासीतया
सह रावणोपवनकं प्रवेशित: ॥ अथांतगृहे ऽपन शीतेव भासमानां पूर्व
उेनो कृतयुगे तं शप्त्वाग्नौ विसृष्टदेहां वेदवतीं ॥ तामपि छायारूपां दृष्ट्वा
केयमिति प्रपृच्छेति वाक्यशेष: ॥५४॥ अथाग्निनाह ॥ इयंजनक पुत्रीच
विष्णुपत्नी जनेश्वर ॥ इयंजनपुत्रीच विप्रपत्नो नेश्वर: इति पाठांतरं ॥
विप्रपत्नीजनेश्वरेतिच ॥ हेजनेश्वर ॥ रक्षोजनेश्वर ॥ जनकपुत्री ॥ विष्णु
पत्नीच ॥ इयंच ॥ इयमेव ॥ तर्हि केयमित्यत आह ॥ जनकपुत्री चेति ॥ पुत्रीव ॥
पुत्तलिकेति यावत् ॥ सूर्यपत्न्या संज्ञया निर्मित छायेव मनो मयीकांति
शीतेति यावत् ॥ च शब्द इवार्थे ॥ कथं सैषा ॥ तव पद्मा गतेत्यंतं आह ॥
राघव इति ॥ यदा यदा राम: सह लक्ष्मणो विपिने संचरन्नास्ते तदा
जानकीं लङ्कयात् रक्षत् ॥ मम सन्निधौ संस्थाप्य ॥ स्वाहायां सन्निवेश्य
संचरन्नास्ते इति योजना ॥ अत: सा मद्गृहे पूजितास्तीति भाव: रक्षन्नि
ति हेतौ शता ॥ तर्हि मामपि अंकमानोपयामीत्याह रावण: अथाग्नि: ॥
न्यासभूता वैदेही मयि विन्यस्ता न्यासस्य प्रत्यर्पणं न्याय्यं ॥ अन्य
था कृतघ्नतास्यात् ॥ अस्तु तव तथा मम का हानि नित्यत आह ॥ शि
ष्योसि परमोदार मम कल्याण रावणं ॥ इति हे रावण अन्येषां देवा
नां अकल्याणोपि मम कल्याण ॥ अभ्युदय हेतो ॥ अन्येषां सर्वस्वप
म हार्यपि मम परमोदार ॥ अदेय प्राणानपि दात: ॥ अन्येषां शास्तापि
मम शिष्योसि ॥ हिताहित प्राप्ति परिहारोपायं उपदेष्टु मदोसि ॥
एतावंतं कालं अतो मयि नैतन्नवोचित मिति शिरसि हस्त निधाय
कपोलौ स्पृष्ट्वा ययाच इति भाव: ॥ तर्हि तामेव देहीत्याहेति वाक्यशेष: ॥
५६॥ अथ किमभूदित्यत आह ॥ स्वाहाया मिति ॥ स्वाहायां सन्निवेश्या
थ नाम्ना वेदवतीं शुभां ॥ शीताकृतिं तत: कृत्वा मायया मेषवाहन: ॥
ददावग्नौ विशेषेण भक्ति वै रावणस्य चेति ॥ अत्र पाठांतरं

भ.पु स्वाहायां सन्निवेश्यायेति ॥ हुताशनेति विशेषेणेतिच ॥ अथ मेषवाहनः ॥ वें.मा
छिन्नघ्यनेता: छायासीतां स्वाहायां सन्निवेश्य ॥ तदंतर्हित निजसीताप्रभवैक भावं प्रापय्य ॥ ततो मायया नक्तो व्यामोहनकार्य दैव्या निज शक्त्या ॥ वेदाया अपि नावणः साक्षाद्दर्शन संभाषणानर्ह इति शीताकृतिं छिन्नघ्य ज्वालामायीं शीतापुत्तलिकां कृत्वा ॥ नाम्ना वेदवतीं शुभां निजवेदवतीं स्वाहायां सन्निवेश्य तदंतः सन्निहित निजशीतयैकी भावं प्रापय्य ईषदस्ति ईषदपि नास्ति इत्येवं यथाकार्यकालं ईषत्कलां सन्निधाप्य व्यवहानसि ध्येइंद्र मावेश्य नावणाय ददाविसर्थः ॥ हुनाविति पाठे ददाविति शेषः ॥५८॥ ७

रि संस्थाप्य विपिनेनामः संचनन्सह लक्ष्मणः ॥ शिष्योसि पनमोदान
मम कल्याण नावण (कानण) ॥५५॥ स्वाहायां सन्निवेश्याथ नाम्ना
वेदवतीं शुभां ॥ शीताकृतिं ततः कृत्वा मायया मेषवाहनः ॥५६॥
अग्नौ विशेषेण भक्तिर्वै नावणस्यच ॥ तस्मादग्निं वचः श्रुत्वा
जानकी मनसा स्मनन् ॥५८॥ अहस्तां मन्यमानोसौ नावणो मोहदर्पितः ॥
लंकां गत्वाशोकवने शिंशुपा वृक्षमूलतः ॥५९॥ स्थाप्य सीताकृतिं
क्रून इंद्रा विष्टांसनाक्षसः ॥ नामो गत्वा तु तं हत्वा नावणं सगणं खलं ॥६०॥

पनम दुर्विनीतस्यैवं नीतिमार्गे कथं प्रवृत्तिर्न भूदित्यत आह ॥ अग्नाविति ॥ नावणस्यच सकललोक विनावणस्य क्रूनस्यापि अग्नौ विशेषेण भक्तिः ॥ विशिष्टा भक्तिः इति वै प्रसिद्धं ॥ नावणस्य वाल्यर्जुनादिमेत्पादौ अग्नेः साक्षित्वात् ॥ अयं भाव: नावणस्य दिक्पाला इन्द्रादयः शत्रवः ॥ कोणपाः मित्राणि वायव्यस्थे कोनपंचाशन्मनन्दंतर्गतस्य प्रधानवायुभिन्नस्य दितिपुत्रत्वाद्द्वेष्यत्वाच्चेति भाव: ॥ तत्राप्यग्निनन्पाध्याय: इति ॥ तस्मादग्नि वचः श्रुत्वेति ॥ किंवा भवतु गुनुवचः श्रोतव्यं तद्धितोदर्कं भविष्यति इति अग्निवचः श्रुत्वा जानकीं मनसा स्मनन् निजातादृशी इयंचकीदृशीति पनीक्षां चकानेति शेषः ॥ तदा तदाकृति सन्निहित यथाकार्यकालयाकलया प्रापित मोहेन दर्पितः हृष्टो भूत् अत एवाहः अजानन् ॥ तां आकृतिमेव ॥ तां शीतां सांवितां मन्यमानः असौ नावणः तामादाय अंकमानाप्य लंकां गत्वा अशोकवने ॥ शिंशुपा वृक्षमूलतः ॥ अगनन्वृक्षमूले ॥ इन्द्रा विष्टां शीताकृतिं सीताप्रतिमां ॥ स्थाप्य ॥ संस्थाप्य ॥ ल्यबार्थः ? ॥ सक्रूनोनाक्षः

अ·पु· अंतः पुनं प्रविवेशेति शेषः ॥ ५०॥ अथ जगन्नाथोनाम ः॥ नु सेतुना॥ वें.॥
लंकांगत्वा ॥ खळं ॥ उक्तेपि हिते दुर्जनं सगणं नावणं हत्वा शीतां ६
प्राप्य अयोध्यां पत्यपद्य तेति प्रसिद्ध त्वया श्रुतमि तिशेषः ॥ एत
न्मध्ये किंचिद्रहस्य मभूदित्यत आह ॥ तत्रेति ॥ लोकापवादेन ॥
लोकः अज्ञजनः ॥ तस्य ॥ अपवादो निंदा ॥ तेन ॥ दीर्घकालोषिता
येयं नावणांतः पुने शुभा ॥ बालिशः खलु कामात्मा दशनथात्मजः॥
इतिवक्ष्यंति मां संतो जानकीमविशोध्य हि ॥ अस्यार्थः ॥ नावणांत :
पुने इयंच शुभा सुंदनी दीर्घकालोषिताच ॥ यदीयं दशनथात्मजोनामः
स्वीकनोति ॥ तर्हि कामात्मा बालिशः ॥ इत्यज्ञा वक्ष्यंति संतस्तु इयं
नावणांतः पुने दीर्घकालोषितापि शुभां ततः ॥ पनिशुद्धा ॥ तयापि॥
यद्य विशोध्य स्वीकनोति तर्हि कामात्मा बालिश इति वक्ष्यंति ॥
इति सद्भिः वाच्यो भविष्यामीति यावदिति ॥ यद्वा लोकापवादेन ॥
लोक आलोको सर्वमाया निर्भेदि दर्शनं तेन अपवादो बाधः ॥ तेन ।

सीतां प्राप्य जगन्नाथ अयोध्यां प्रत्यपद्यत ॥ तत्र लोकाप
वादेन शीतामग्नौ प्रवेशयच ॥ ५१॥ शीताद्वंद्वं तदा दृष्ट्वा
उवाच निज भामिनीं ॥ कासा देवी तव समा तवनूप सम
न्विता ॥ ५२॥ नजानेहं वनांगेतां चंद्रबिंबाननां शुभां॥
नाघवेणो नमुक्तासा जानकी वाक्य मब्रवीत् ॥ ५३॥ मद्दुखं
भो तया भुक्तं यन्तिमित्तं दयापन ॥

नेयं सीता किंतु तदाकृतिनग्ने यीति बाधेन ॥ शीतां ॥ आग्नेयीं तदा
कृतिं अग्नौ प्रवेश्य स्वीकनण समये विनष्य नेताः स्वकृत हिन
ण्मय स्वज्वालामयीं माकृतिं स्वीकृत्य तस्मिन्निहितेष लक्षणं नि
ज वेदवत्या संमेळ्य स्वाहांतर्हित निज देव माया शीतां निजवे
दवतीं च ना मायस्तु वन्दर्शयामासेति संदर्भ शेषः ॥ ५१॥ तत;
किमभूदित्यत आह ॥ शीताद्वंद्व मिति ॥ शीतायाः रूपद्वंद्वं ॥
तयोः स्वनूपैक्यात् ॥ दृष्ट्वा ॥ तदा निज भामितीं ॥ मय्य दोषे
कुतोनोष इति शीर्ष्याकृत कोपात्मक मनता ज्ञानवतीं ॥ निजाम्
वाच ॥ दर्शयत लोक संग्रहमुवाचेत्यर्थः ॥ किमिति ॥ कासेति ॥

५

सा अपूर्वा॥ तव समा॥ देशकालगुणावयोवस्था शीलतः समा तव नृप सम न्विता॥ त्वत्समाकारा॥ देवी॥ का॥ किमाख्या कुत्र स्थि तेत्यर्थः॥ सर्वं ज्ञातं विडंबनमात्रमिदमित्यादि शीर्ष्ययाशीतमो क्ते आह॥ न जाने इति हे वनांगे॥ अंगने॥ चंद्रबिंबनिभां नाकाचं द्र कांतिखिन्न मनोह्लादिनीं॥ शुभां कल्याणीं॥ तां ताहं जान इति कुपित शीताकोपशांतये उवाचेत्यर्थः॥ ततः॥ किमित्यत आह॥ नाघवेणोति॥ स्पष्टोर्थः॥ मद्दुःखमिति या पुनाकृतयुगे बार्हस्प त्य कुशध्वजसुता नाम्ना वेदवती नाम तथा प्रसिद्धा सती नावणा स्पर्शात् तनं अग्नौ देहं विशोध्य स्वाहायाः सन्निधौ स्थिता॥ तया वेद्या॥ यन्निमित्तं॥ निमित्त पर्याय प्रयोगे सर्वासांप्राय दर्शन मितिवा

दैने र्तिकाद्वेश स्मे प्रयोजनाय॥ मद्दुखं॥ मये वानुभूयमानं॥ कष्टं॥ यद्यस्मात् भुक्तं॥ अनुभूतं॥ तत्तस्मान्मये वानुभूयमानं सुखमनु भविष्यसीति मया वनदानात्॥ हे दयापन तामंगीकुर्वित्याद्याहेत्यर्थः॥ इति दत्तवनापूर्वं मया लक्ष्म्याच सुंदरीत्या युक्ते:॥९६॥ एकपत्नीव्रतमिति॥ एकपत्नी व्रतं मे यत्कृतं जानासि भामिनि॥ ज्ञापनेन करोमीति बहूनां वरदो यतः इति॥ एकपत्नीव्रतं॥ एकैव पत्नी धर्माय॥ सत्यपि विभवेऽन्यनाजव न्न भोगाय द्वितीयादिः॥ इति पुंसः॥ नाजपुत्र्यपि नाजपत्न्यपि पत्युर्मा बत्सौ वा धुनमेकैव पत्नी भूत्वा ध्रियइति स्त्रियोपि एकपत्नीव्रतं॥ एकैव पत्नी एकपत्नी तत्साध्यत्वाद्व्रतमपि तथोपचर्यते॥ एकपत्नीय तत् व्रतंच एकपत्नीव्रतं॥ सर्वभाग्यं ममैव स्यात् स्वयमिं दिनैषपाते मानकान्नीत्या युक्ते:॥

नाम्ना वेदवती नाम स्वाहायाः सन्निधौ स्थिता॥९५॥ तामंगी कुरु गोविंद विवाह विधि पूर्वकं॥ इति सीतावचः श्रुत्वा नामो वचनमब्रवीत्॥९६॥ एकपत्नी व्रतं मे यत्कृतं जानासि भामिनि॥ ज्ञापनेन करोमीति बहूनां वरदो यतः॥९७॥ तव वाक्यं करिष्या मि अष्टाविंशति मे कलौ॥ तावदेषा ब्रह्मलोके ब्रह्मणा पूजि ता वसेत्॥ श्रुत्वा दाशरथेर्वाक्यं जगाम भवनं विधेः॥९८॥

तथा चेत्थं योजना॥ हे भामिनि॥ अद्य॥ अष्टाविंशति तमे त्रेतायुगे॥

मे॥ एकपत्नीव्रतं यावद्बतानं करोमी त्येवं कृतं संकल्पं त्वं जानासि॥ 
अहमपि॥ त्वमिव त्वत्सहचर्यात् वेदयापि एकपत्नीव्रतंकृतं जानामि॥ 
द्वापने अष्टाविंशे पतोहं बहूनां स्त्रीजनानां वनद: पतित्व वनद:॥
अतो द्वापने एकपत्नीव्रतं नकरोमीति॥ कृतंच जानासि॥ अतस्तव
वाक्यं॥ अष्टाविंशतितमे॥ अष्टाविंशतितमे कल्पे करिष्यामीति॥
तावदिति स्पष्टोऽर्थ:॥९८॥ कानणमिति॥ पद्मावत्या: काननं॥
जनिकाननं॥ हेसुव्रते॥ तव तुभ्यं मया भाषितं॥ एतत्सत्यं भवत्से
वेत्याह॥ नमे इति॥ मेवाक्यं कदापि केनापि असदनृतं नभूयादि
ति वेदविद:॥ इत्युवाचेति पूर्वेणान्वय:॥९९॥ अतेदं बोध्यं॥ वन
गमनात्पूर्वं नाम मनोहरनरूपा शीतानक्ष: संहृतोपयोगिनह्रो व्या
सोहनाम वनगमनोपक्रमे॥ देवमायैव तिलोत्तमेव नानायणीव प्रादु
र्भूत रूपविशेषासती नाम मनुगता॥ सा पुनर्जनस्थाने नामेलक्ष्मणेच
वनं गते नहि ते देवमाया जानकीनावण मात्रोकप अग्निहोत्रस्याग्नि
मुवाच॥ मनोमय्या-च्छायासीताया नावणमहं मोहयामि॥ अहंच तव
सन्निधौ स्वाहां तर्हिता पाताळे वसामि॥ त्वंच मनोमय्या तयासह
नावणं पाताळमानीय स्वज्वालामयीं मत्पुत्तळिकां कृत्वा नावणमो
हनाय॥ वेदवत्या एकां करो यथाकार्यकाले सन्निधाप्येंद्रमाविश्य
मन्मायाशक्त्यापोद्बलितया त्वन्मायया तं मोहयित्वा दत्वाअथ
नावणवधांते नामो मत्पुत्तळिकांच दृष्ट्वा॥ अहो किमिदं स्त्रीणां
महीयसी मोहनशक्ति:॥ एवं बहुविध चिंताशोक वान्निवध
वाननसंमेळन शीतान्वेषण सेतुबंधनानेक नक्षोहननादिपरि
श्रमेपि सान लब्धा मामपि मोहयंत्याति र्घृणाया एवं कुटिलया
शीतया किं प्रयोजनमिति यदा मह्यं कुप्यति तदा तं स्तुत्वा मां
वेदवतींच देहीत्युक्त्वा मनोमयीं च्छायासीतां निर्माय शालायां वि
सृज्य शालाग्नि भार्यां स्वाहाप्रभायां॥ आत्मानमंतर्धाय पाताळे
स्वात्मक वेदवत्या सह स्थिता॥ अथ नामो नावणं हत्वा कृतिमग्नौ
निवेश्याग्निदत्तं शीताद्वंद्वं ददर्शेति उवाच मंदवचनमित्यादि
शीताद्वंद्वं तदा दृष्ट्वेत्यंतास्वंडार्थ:॥९९॥ उक्तार्थानोक निचित्पुना
णवाक्यानि लिख्यंते॥ तथाहि॥ नामायणे॥ नामस्य दयिता
भार्या नित्यं प्राणसमा हिता॥ जनकस्य कुले जाता देवमायेव निर्मिता॥

भ·पु· सर्वलक्षणसंपन्ना नारीणामुत्तमा वधूः ॥ शीताप्यनुगता रामं वैं·मा.
शशितं रोहिणी यथेति ॥ ध ॥ तथाह्यग्नेये ॥ अग्निहोत्रस्थितं
वह्निं जगत्साक्षिणमीश्वरं ॥ विदित्वा प्रांजलिर्वाक्यं लोकसंग्रहम
ब्रवीत् ॥ ॐ अग्ने गृहपते कर्मसाक्षी मध्यस्थ दृग्भवात् ॥

| |
|---|
| कारणं पद्मवत्यास्तु भाषितं तव सुव्रते ॥ न मे वाक्य<br>मसद्भूयादिति वेद विदो विदुः ॥९८॥ |

हितकारी च लोकानां अहं गृहपतिस्त्वया ॥ रक्षणीया प्रयत्नेन यन्म
या त्वं च रक्षितः ॥ त्वत्तेजसि विलीनास्यां यावद्रामजयाद्रणे ॥ कौटि
ल्यं दर्शयन्स्त्रीणां यदा कुप्यति मां रविः ॥ नामायार्पय मां भद्र त्वा
तं लोकसन्निधौ ॥ इत्युक्त्वा सा प्रभावेन प्रतिबिंबमनोमयं ॥ यथा
रूपं यथा वेषं कल्पयित्वा त्रिसुंदरं ॥ वह्न्यावाच्छादयंती स्वमात्म
नं समुपस्थिता ॥ यथैव मातरं पुत्रः पितरं पालयेच्छुचिः ॥ तथा
रक्ष वैदेहीं विलीनोग्निः स्वतेजसा ॥ अथ मायामयी शीताप्य
मार्येष संस्थिता ॥ ददर्श संचरंतं तं मारीचं निर्गता बहिर्निसादि
वनाहि ॥ पुनात्रेतायुगे पुण्ये रावणं हतवानहं ॥ तदा वेदवतीकन्या
साहाय्यमकरोच्छ्रियः ॥ शीतारूपा भवल्लक्ष्मी जनकस्य महीतला
त् ॥ गते मयि तु मारीचं हंतुं पंचवटीवने ॥ ममानुजोपि मामेव
शीतया चोदितो ययौ ॥ तदंतरे राक्षसेंद्रो हर्तुं शीतामुपाययौ ॥
अग्निहोत्रगतो वह्निः तं ज्ञात्वा रावणोद्यमं ॥ आदाय शीतां पाता
ले ॥ स्वाहायां सन्निवेश्य च ॥ तेनैव राक्षसा स्पृष्टां पुना वेदवतीं शुभां ॥
अग्नौ विसृष्टदेहां तां शप्त्वा तं रावणं पुनः ॥ शीताया रूपसदृशीं
कृत्वा चैवोत्ससर्ज ह ॥ सा रावणहृता भूता लंकायां सन्निवेशिता ॥
हतेतु रावणे पश्चात्पुनरग्निं विवेश सा ॥ अग्निस्तु रक्षितो लक्ष्मीं
स्वाहयामास जानकीं ॥ रत्वास्तु त्वाच मामाह शीतया सहितं शिखी ॥
इयं वेदवती देवी शीतायाः प्रियकारिणी ॥ शीतार्थं राक्षसगृहे तेन
बंदीकृता स्थिता ॥ तस्मादेनां वने णैव प्रीणयत्वं श्रिया सह ॥ इति वह्नि
वचः श्रुत्वा शीतामामवदत् शुभा ॥ मम प्रीतिकरा नित्यं इयं वेदव
ती विभो ॥ एनं भागवतीं देवैः वदतां वनयप्रभो इत्यादि ॥ सूत्रपाल
भेदवत्पाठभेदः ॥

अ· पु· श्लोक भेदात्साधुः॥ अत्र पाठभेदेऽर्थसंगमनप्रकारो निरूप्यते॥ स्वाहवें. मा
या सन्निवेश्येति पाठे॥ हविर्भुजः तया सीतया॥ सुपापेन रावणेन च सह ५
पाताळमुपगम्य॥ स्वाहया हे स्वाहे॥ अहं रावणं॥ बहिरेव बोधयामि
त्वं च सांत्वयंती मातेवागत्य सीतां शिशुमिवोद्धृत्यां तर्निवेशनं निवेश्य
स्वप्रभया च्छादयेत्युक्ता या स्वाहया॥ सन्निवेश्य॥ अंतर्निवेशनं निवेश्य
नाना वाक्यगणैः सह हे जनेश्वर इयं जनकपुत्री विष्णुपत्नी॥ किंच
त्वद्भयाज्जानकीं रक्षन् राघवः मम सन्निधौ जानकीं न्यासरूपेण सं
स्थाप्य सलक्ष्मणो विपिने संचरन्वर्तते॥ किंच हे रावण ममत्वं परमो
दारकल्याणशिष्योसि इत्येवं नाना स्ववाक्यगणैश्च रावणं बोधया
मासेति॥ तद्वाक्यमाकर्ण्यावधान्य स्वाहया सन्निवेश्येत्यंतमेकवाक्यं तया
योजनेति॥ अयं भावः॥ विष्णुपत्नीत्वाज्जगन्माता न प्रधर्षणीया॥ मयि
न्यासतया न्यस्तत्वात्मया न त्याज्या॥ त्वं च मद्विनयग्राही॥ तस्मादयं उद्यो
गो निकर्तनीय इति॥ नैतज्जग्राह रावणः॥ अथ मेष वाहनः॥ ततः रौ
जल्यात्॥ मायया॥ मोहनशक्या॥ नाम्ना वेदवतीं॥ शुभां सीताकृतिं कृत्वा॥
तत्पुत्तळिकायां सूक्ष्मकलया सन्निधाप्य ददाविल्यर्थः॥ शेषं पूर्ववत्या
स्मि संगमनीयं॥१॥ एतन्मध्ये विप्रपत्नौ नरेश्वर इति पाठभेदोस्ति॥ तस्मि
न्संगमनप्रकारः॥ इयं जनकपुत्री नरेश्वरः नामश्चैतौ विप्रपत्नौ भृ
ब गया कर्तव्येति जानकी नामा न कर्तव्येति विरुद्धभाषिणौ बभूवतुरिति
शेषः॥ अथ राघवस्त्वद्भयाद्रक्षन्नित्यादि शेषं सुगमं॥ अस्मिन्नप्यर्थे
ग्रंथांतर संवादोस्तीति ध्येयम्॥२॥ विप्रपत्नीत्यस्मिन्पाठे प्राथमिकीं
भिन्न भिन्न वाक्ययोजनामिति मनुसृत्य संगतिः कार्या॥ तथा हि॥ राव
णः सीताद्वंद्वं तदा दृष्ट्वा केयमिति पप्रच्छ॥ तदा तमग्निराह गुह्यभाष
या मोहयितुं॥ उभे अपि च्छायारूपे सीतावेदे॥ व्यत्यस्य॥ इयं जान
कीति वेदां जानकीं च विप्रपत्नीति॥ रावणस्तु गूढोक्त्या भ्रांतः॥ कि
मिति॥ सीता॥ मां मोहयितुं कांचन स्वसखीं विप्रपत्नीं परव्यामोहन
दक्षां वनेन च्छंदयित्वा तत्र शालायां नियोज्यांतर्हितासीत्॥ तदजा
नन् अहं विप्रपत्नीमेवानीतवानिति॥ भ्रांत्यर्थस्मालीकत्वान्न ग्रंथां
तर संवादापेक्षा॥ तथा गेनानृतभाषित्वं॥ विर्विशिष्टः प्रप्रकृष्टः॥
विश्वासौ प्रश्च तथा विशिष्टेषु प्रकृष्ट इति वा विप्रो विष्णु॥ तस्य
पत्नी त्यभिप्रेत्य प्रयुक्तत्वात्॥ अकम्प्र विसंभ्रमेत्यादिः शेषं प्राथमि
क योजनावत्॥ २॥

 हनावगत्वा विति पाठस्यतु वास्तवार्थेऽर्थ संगतिः॥ तथाहि॥ नावणोऽ 
कंपनवचः श्रुत्वा शीताहनणोद्युक्तो मानीचेन निवानितो निवृत्तः॥ पुनः 
सनत्कुमानोक्त वृत्तांतमनुस्मनन् पुननागतो मानीचेन पुनः निवार्य
माणोपि पनमार्थे गूढाभिसंध्या अतिवृत्तः शीतामाचकर्ष॥ तदाग्नि
र्मध्यमलोक भाग्यविभवाच्छिष्यो न निक्तो भवेदिति घृणया नाना
भक्त्या बोधयामास॥ तथापि नावणः सर्वमिदं तृणीकृत्य काममुख्या भक्त्या
शीतामादाय॥ द्वेषमुख भक्त्या नाम शना हतः पार्षदतां प्राप्नुयादि
ति इयं नत्वाज्येति॥ तदाहाग्निः॥ इयं जनकपुत्री विष्णुपत्नीच
त्वां वनवध्यत्वामत्सन्निधौ स्थिता सैषा चैकं तेजः॥ नाणुमात्र मंतन
मे तयोः पनंतु नाघवः त्वद्भयात्॥ त्वां नक्षन् जानकीं मम सन्निधौ
संस्थाप्य विपिने संचनन् वर्त्तते त्वंच मम पनम शिष्योसि तवानि
ष्टं मा भूत् अत इयं नानेया॥ अथ स्वाहा मां तां निवेश्य॥ ततोमेष
वाहनः॥ स्वसामर्थ्येन शीताकृतिं कृत्वा नाम्नावेदवतीं तन्नैककल्पया
सन्निधाप्य ददाविति शेषः॥ कथं तदाकृति मात्रेण शांत इत्यत आह॥
हनावगत्वा बित्यादि॥ हनौ देवे विष्णौ अग्नौ गुनौ॥ विशिष्टा भक्तिः
हनौ द्वेषमुखी मुखतो नाक्षसत्वात्॥ गुना उपसन्तिमुखी॥ तस्मा
त्तद्वचः श्रुत्वा नाक्षस भावेन मोह दर्पितो पार्षद भावेना मोहदर्पितः
अत एवाहः॥ विष्णुमाहात्म्यज्ञानी॥ असौ नावणः॥ जानकीं मनसा
सस्मनन्॥ मनसि निधाय॥ तामेव आकृतिं मन्यमानः स्वाभीष्ट
साधनमिति जानन् लंकां गत्वेत्यादि॥ शिष्टं सुगमं॥ त्वदन्य पर्यायः॥
अस्मिन्नर्थे उत्तनकांडकथैव मानं॥ ७॥ यद्वा हनते नौणादिकडः
प्रत्ययः॥ हनत्यज्ञानमिति हनः। तन्वत्॥ हन् हनः॥ अस्मिन्नर्थे
प्रसिद्धिः प्रमाणं॥ नचाप्रयुक्तत्वं दोषः॥ तस्य काव्य विषयत्वात्॥
अथवा हनते नच इः नडे बाधा योगे नैव हनिर्हनः॥ नचकते
नानायणादीनीत्यादिना विनोधः॥ एतदन्य विष्ण्वादीनामेवा
दिना ग्रहणात्॥ हनि शब्दस्यान्यत्र प्रयोगदर्शनाच्चेति दिक्॥ ७॥
किंस्वनूपेत्यस्य विष्णुपत्नीत्युत्तनं॥ किं नामिकेत्यस्य वेदवतीति॥
कीदृशीत्यस्य तव समेति॥ किमर्थं जनिनित्यस्य मत्पत्नीत्व सं
पादनार्थमित्युक्तं भवति॥ ७॥ ९७॥ ततः किमित्यत आह॥ श्रुत्वेति॥
तज्जननं॥ तस्याः पद्मायाः जननं जनिहेतुभूतं कर्म॥

भ.पु. ।संसाधमिषितपरिणाय न साधनमेवेति श्रुत्वा सुकन्नमेतदिति ॥ श्रें गा.
आनंदपूर्णा भवत् ॥ सा लक्ष्मी भार्या विष्णुनतस्तस्यास्त्व क्षिप्र
स्त्रियाः हान उचितः ॥ कौतूहलेति ॥ अदृष्टश्रुत माहात्म्य श्रवणाश्चर्या ६
विष्ट मनस्का बकुळा श्रीनिवासमभाषत ॥ किमभाषतेत्यत आह ॥

श्रुत्वा तज्जननं कर्म बकुळानंदनिर्भरा ॥ कौतूहलसमाविष्टा
श्रीनिवासमभाषत ॥ ५९ ॥ गच्छामि राजेंद्रसभां सभासदैः
संपूर्णसर्वार्थकळत्रपूर्णां ॥ इत्येव मुक्तो भगवान्जगद्गुरुः संप्रे
षय-तां बकुळां स्वकाननात् ॥ ६० ॥ दिव्यां तुरंगीमारोप्य नि
र्मितां देवमायया ॥ स्वपुच्छनष्टका मश्वां आरुह्य बकुळा वदत् ॥ ६१ ॥

गच्छामीति ॥ सभासदैः ॥ सभास्तानैः संपूर्णाः संपूर्णानि ये सर्वार्थाः ॥
सर्वधनानि येषु तानि ॥ तथा ॥ तानि च तानि कळत्राणि च ॥ राज्ञां दुर्ग
ह्य स्थानानि ॥ तथा तैः पूर्णां ॥ यद्वा सभासदैः संरक्ष्य चतुर्विध पुरु
षार्थपूर्णां ॥ कळत्राणि च ते संपूर्णसर्वार्थाश्च संपूर्णसर्वार्थकळ
त्राणि ॥ कडारादिः ॥ नित्यसापेक्षत्वात्समासः ॥ यो[illegible]ग्य भाजन
श्रो योः पात्रत्वमथ संरक्ष्य वस्तुनि ॥ नृपाणां दुर्गमस्थाने कळत्रं श्रोणि
— भार्ययो नितांते नानार्थः ॥ मोक्षसंरक्षणं च ज्ञानद्वानेति ॥ संपूर्णसर्वार्थो
विष्णुस्तस्य कळत्रं भार्या ॥ तैनैव पूर्णां सर्वसंपदाऽन्यूनां इति वार्थः ॥
राजेंद्रस्य सभा यस्यां सा तां नारायणपुरीं गच्छामीति आभाषतेति
पूर्वेणान्वयः ॥ द्वितीयपादेंद्र वज्रेतरपादेंद्र वंशोपजातिः ॥ भिन्नच्छं
दो भवानां वृत्तानां मेळनेपि उपजातित्व संभवात् स्यादिंद्रवज्राय
दितौ जगौगः ॥ ३३ ॥ स्यादिंद्रवंशा ततजैरसंयुतैः इति तल्लक्षणे ॥ १२५
स्वांशप्रतिपाद्य राजवंश पुनयोर्मात्वाभेदत्व सूचनाय पाद्य पद्य
स्येव वृत्तद्वयता वैशद्यं बोध्यं ॥ अत्र मध्ये संदर्भशेषः ॥ अथ स्वस्थ
चित्तः श्रीनिवासः स्वयं भुक्त्वा तदैव भुक्तया तया ॥ स्वस्थचित्ताश्वः
पुष्येण प्राजापत्ययोगे गच्छामीति इत्येवमुक्तो भगवान्जगद्गुरुः
देवमायया देवव्यामोहिन्या स्वेच्छया निर्मितां दिव्यां देवानामप्यहीं ॥
गुंजामणिसमाकारां ॥ तुरंगीं वडबां जातेनिति ओष् आरोप्य स्व
काननात् स्वकार्यनिमित्तात् ॥ तां संप्रेषयत ॥ ततः किमित्यत आह ॥

सा
अ.पु॥ स्वपुच्छेति॥ पुनरागमाभावात् स्वपुच्छ एव रक्षको यस्याः तां अश्वां वें॥
जातिलक्षणदोषं बाधित्वाऽजादित्वात् टाप् आरुह्य बकुला अवदत्॥६१॥ ६
किमिति॥ मार्गमिति॥ नृपपत्तनं॥ पुरं॥ इममेव प्रत्यक्षमेव॥ वनं
मार्गमारुह्य॥ गत्वा गिरिस्तटादवरुह्य पर्वताधः प्रवेशः कर्तव्यः॥
उद्योगः साहसं धैर्यं॥ बुद्धिः शक्तिः पराक्रमः। षड्भिर्मनुष्यचिंता
स्यात्सप्तमं दैवचिंतनमित्युक्ते दैवं चिंतयति॥ पर्वताधःप्रदेश इति॥
पर्वताधःप्रदेशे च कपिलपूजितः शिवोस्ति॥ तत्र कपिलेश्वरसन्नि
धौ॥ असौ पूर्वदृष्टः॥ तीर्थराज आस्ते॥ तत्र तीर्थपुंगवे॥ मदर्थं
मत्कार्यार्थं॥ यथायोग्यं कल्याणसिद्ध्यर्थमिति संकल्पपूर्वकं मद्वा
यथायोगं॥ प्रकृतकार्ययोगमनतिक्रम्य॥ अविलंबेनेति यावत्॥
स्नात्वा॥ कपिलेश्वरमासाद्य नत्वा प्रसाद्य॥ हे शंकर॥ दयासारः
श्रीनिवासः॥ हे देव व्यवहारचतुर॥ हे शिव॥ चिकीर्षितकार्यदुरि
स्तु त निवारण॥ शंकर॥ ते तुभ्यं नमोस्तु मे कल्याणं॥

मार्गं वद रमाधीश गच्छामि नृपपत्तनं॥ श्रीनिवासः॥ इममेव
वनं मार्गं अवरुह्य गिरेस्तटात्॥६२॥ पर्वताधः प्रदेशे च कपिल
पूजितः शिवः॥ तत्रास्ते तीर्थराजोसौ कपिलेश्वरसन्निधौ॥६३॥
तत्र स्नात्वा यथायोगं मदर्थं तीर्थपुंगवे॥ कपिलेश्वरमासाद्य या
च्यतां वरऽव्ययः॥६४॥ श्रीनिवासो दयासारो वदते रमणं तव॥
कल्याणं कुरु मे देव शिव शंकर ते नमः॥६५॥

पश्चात् कल्याणं कुरु कारयस्व इति अव्ययो वरः त्वया याच्यतां॥ इति
तव रमणं॥ वदते॥ उक्त्वा प्रेषितवानस्ति इति वदेति शेषः॥ वास्तवार्थ
स्तु॥ हे देवि त्वं शिव शंकर देवते नमः॥ इति नमः कुरु मे यत्कल्याणं
तदनुकूलाचरणं तदेव तव॥ रमणं मह्यं नतिस्तुति लक्षणं प्रावण्यं
इति वरो याच्यतां इति वदेति॥ याचतां वरमव्ययमिति पाठे यतः
यत्र स्नातः कार्यार्थी जनः कपिलेश्वरमासाद्य प्रसाद्य तं कपिलेश्वरं
अव्ययं वरं याचतां॥ स वरो दाता हरो वरं दत्वा दुःसाध्यमपि कामं
पूरयति॥ इति तन्माहात्म्यप्रसिद्धिरतस्त्वया श्रीनिवासो दयासार
इत्याद्युक्तप्रकारेण वरो याच्यतां इति विपरिणामेनार्थोऽह्येयः अकथि
तं कर्म॥ बलिं याचते वसुधामितिवत्॥

त
न त्वं बंधि वनयाचन मिति बोधः लिंगव्यत्ययश्च अमणां अगति कागतिः॥ 
याच्यता मिति पाठ इति॥ देवाद्भुतेवनः श्रेष्ठे त्रिब्वित्समनः॥६५॥ ततः शुक 
मिति॥ दंडवत्पतनं कुरु॥ ततः शुकेन कस्मात्त्व मिति प्रश्ने॥ सदाकल्याण
कांक्षिणा श्रीनिवासेन प्रेषितास्मि इति वद इति शेषः॥ एव मुक्त्वा शुकं
देवि इत्यादि पद्यद्वयं स्पष्टार्थं॥ तस्य पद्मैः पूजितो पद्मा दातानो भवत
इति भावः॥ उचितं कुर्विति॥ कन्यार्थं कन्या निमित्तं कन्या घटनार्थं॥
उचितं ऋतमनृतं वा यत्र देशकाल जनावस्थासु उचितं तत्कुर्विति योज
ना॥ उक्ता क पर्यंत निवाह इति भावः॥ अथा यत्कन्यार्थं कर्म तदुचितंकर्म॥
श्रेयः संपादनाया वश्य मनुष्टेयकं कर्म॥ तस्मा कुर्विति॥ यद्वा कन्यार्थं॥
उचितं॥ यन्मितं॥ यद्योग्यं यच्च ज्ञानं॥ यत्समंजसं॥ तत्कुर्वित्यर्थः॥ उ
चितं॥ स्यान्मिते योग्ये ज्ञाते ऽभ्यस्ते समंजस इति नत्वमाला॥ आज्ञप्ते
ति॥ देवदेवेन॥ लोककर्तृणा पनब्रह्मणा श्रीनिवासेन आज्ञप्ता॥ यथो
क्तं मिति॥ श्रीनिवासेन यद्यथोक्तं तत्तथैवा बला चकानेत्यर्थः॥ कपिल
वनयाचन शुक तमन कृष्णा नाम पूजां तं यथा वच्चकानेति भावः॥
हृयमिति॥ सखीः पद्माक्षीः॥६९॥

ततः शुकं समासाद्य दंडवत्पतनं कुरु॥ श्रीनिवासेन बालेन सदा
कल्याणकांक्षिणा॥६५॥ एव मुक्त्वा शुकं देवि ततः पद्मतटं व्रज॥ तत्रा
सते कृष्णा नामो तत्वा तो भक्तिभावतः॥६६॥ पद्मतीर्थसमुद्भूतैः
कमलैः कमलानने॥ पूजांकुरु मदर्थं तौ भ्रातृवर्गेण वै कृतौ॥ सुवर्ण
मुखरीं तीर्त्वा तत्र गच्छ यथासुखं॥६७॥ उचितं कुरु कन्यार्थं कन्यार्थं
कमलानने॥ आज्ञप्ता देवदेवेन बकुला लोककर्तृणा॥ जगाम शनकैः
शेषाचलादुत्तीर्य चांगना॥ यथोक्तं श्रीनिवासेन तच्चकार तथाबला॥६८॥
हृयमानाथ बकुला सुवर्णमुखरीं तदा॥ तीर्त्वा गस्त्याश्रमं प्राप्ता
सखीं दृष्टवती भवत्॥६९॥

एतदेव विशदयति॥ शिवालये शिवं दृष्ट्वा गता सा शिवमंदिरमिति॥
शिवालये॥ आलीयते संश्लिष्यते ऽत्रेत्यालयो गर्भगृहं॥ तस्मिन्शिवं
दृष्ट्वा शिवमंदिरं॥ मदंति जना अत्रेति मंदिरं मुखमंडपं॥ मंदेः
किरच्॥ तदा गता भूत्॥ तत्र दृष्ट्वा वनाः कन्या काम्यमिति चाब्रवीत्॥

सा

भ.पु॥स्वपुच्छे ति॥ पुनोगमाभावात् स्वपुच्छ एव नकको यस्याः तां अश्वां वें॥

जाति लक्षण दोषं बाधित्वा ऽजादित्वा टाप् आनन्द्य बकुला अवदत् ॥६१॥ ६

किमिति ॥ मार्गमिति ॥ नृपपन्तनं ॥ पुनं॥ इममेव प्रत्यक्षमेष ॥ वनं

मार्ग मागत्य ॥ गत्वा गिनेस्तटादवनह्य पर्वताधः प्रवेशः कर्तव्यः॥

उद्योगः साहसं धैर्यं ॥ बुद्धिः शक्तिः पराक्रमः षडिमे मनुष्य चिंता

स्या त्सप्तमं दैवचिंतन मित्युक्ते दैवं चिंतयति ॥ पर्वताधःप्रदेश इति॥

पर्वताधः प्रदेशे च कपिल पूजितः शिवोस्ति ॥ तत्र कपिलेश्वर सन्नि

धौ ॥ असौ पूर्व दृष्टः॥ तीर्थ नाज आस्ते ॥ तत्र तीर्थे पुंगवे ॥ मदर्थं

मत्कार्यार्थं ॥ यथायोग्यं कल्याण सिद्ध्यर्थ मिति संकल्प पूर्वकं मज्ज

यथा योगं ॥ प्रकृत कार्य योग मनतिक्रम्य ॥ अविलंबेनेति यावत्॥

स्नात्वा ॥ कपिलेश्वरमासाद्य नत्वा प्रसाद्य ॥ हे शंकर ॥ दयासान:

श्री निवासः॥ हे देव व्यवहार चतुर ॥ हे शिव॥ चिकीर्षित कार्य दुरि

स्तु त निवारण॥ शंकर॥ ते तुभ्यं नमोस्तु मे कल्याणं ॥

---

मार्गं वद नमाधीश गच्छामि नृपपत्तनं ॥ श्री निवासः ॥ इममेव

वनं मार्गं अवरुह्य गिरेस्तटात् ॥६२॥ पर्वताधः प्रदेशे च कपिला

पूजितः शिवः॥ तत्रास्ते तीर्थ.नाजोसौ कपिलेश्वर सन्निधौ ॥६३॥

तत्र स्नात्वा यथायोगं मदर्थं तीर्थ पुंगवे ॥ कपिलेश्वरमासाद्य या

च्यतां वनऽव्ययः ॥६४॥ श्री निवासो दयासानो वदते नमनं तव॥

कल्याणं कुरु मे देव शिव शंकर ते नमः ॥६५॥

---

पश्चात् कल्याणं कुरु कारयस्व इति अव्ययो वनः त्वया याच्यतां ॥ इति

तव नमनं ॥ वदते ॥ उक्त्वा प्रेषितवानस्ति इति वदेति शेषः ॥ वास्तवार्थ

स्तु ॥ हे देवि त्वं शिव शंकर देवते नमः ॥ इति नमः कुरु मे यत्कल्याणं

तदनुकूलाचरणं तदेव तव ॥ नमनं मह्यं नतिस्तुति लक्षणं प्राबल्यं

इति वनो याच्यतां इति वदेति ॥ याचतां वनमव्ययमिति पाठे यतः

यत्र स्नातः कार्यार्थी जनः कपिलेश्वरमासाद्य प्रसाद्यतं कपिलेश्वरं

अव्ययं वनं याचतां ॥ स वनो दानो हरो वनं दत्वा दुःस्साध्यमपि कामं

पूरयति ॥ इति तन्माहात्म्य प्रसिद्धि नत स्त्वया श्री निवासो दयासान

इत्याद्युक्त प्रकारेण वनो याच्यतां इति विपरिणामेनार्थो ज्ञेयः अकथि

तं कर्म ॥ बलिं याचते वसुधामितिवत्॥

त
नं तं वं धि वनयाचन मिति बोध: लिंगव्यत्ययाश्रमणं अगति का गतिः ॥ यान्यता मिति पाठ इति ॥ देवाद्दृतेवनः श्रेष्ठे त्रिष्विल्यमनः ॥६५॥ ततः शुक मिति ॥ दंडवत्पतनं कुरु ॥ ततः शुकेन कस्मात्व मिति प्रश्ने ॥ सदाकल्याण कांक्षिणा श्रीनिवासेन प्रेषितास्मि इति वद इति शेषः ॥ एवमुक्त्वा शुकं देवि इत्यादि पद्यद्वयं स्पष्टार्थं ॥ तस्य पद्मैः पूजितो पद्मदातानो भवत इति भावः ॥ उचितं कुर्विति ॥ कन्यार्थं कन्या निमित्तं कन्या घटनार्थं ॥ उचितं ऋतमनृतं वा यच्च देशकाल जनावस्थासु उचितं तत्कुर्विति योजना ॥ उक्तावक पर्यंत निवाह इति भावः ॥ अथा यत्कन्यार्थं कर्म तदुचितंकर्म ॥ श्रेयः संपादनाया वश्य मनुष्ठेयकं कर्म ॥ तस्मा कुर्विति ॥ यद्वा कन्यार्थं ॥ उचितं ॥ यन्मितं ॥ यद्योग्यं यच्च ज्ञानं ॥ यत्समंजसं ॥ तत्कुर्वित्यर्थः ॥ उचितं ॥ स्यान्मिते योग्ये ज्ञाते ऽभ्यस्ते समंजस इति नत्नमाला ॥ आज्ञप्तेति ॥ देवदेवेन ॥ लोककर्तृणा पनब्रह्मणा श्रीनिवासेन आज्ञप्ता ॥ यथोक्तं मिति ॥ श्रीनिवासेन यद्यथोक्तं तत्तथै वा बला चकानेत्यर्थः ॥ कपिलवनयाचनशुक तमन कृष्णा नाम पूजां तं यथा वच्चकानेति भावः ॥ हृय मिति ॥ सखीः पद्मालीः ॥ ६३॥

ततः शुकं समासाद्य दंडवत्पतनं कुरु ॥ श्रीनिवासेन बालेन सदा कल्याण कांक्षिणा ॥ ६५॥ एवमुक्त्वा शुकं देवि ततः पद्मतटं व्रज ॥ तत्रासते कृष्ण नामो तत्वातो भक्ति भावतः ॥ ६६॥ पद्मतीर्थसमुद्भूतैः कमलैः कमलानने ॥ पूजां कुरु मदर्थं तौ भ्रातृवर्गेण वै कृतौ ॥ सुवर्णमुखरीं तीर्त्वा तत्र गच्छ यथासुखं ॥ ६७॥ उचितं कुरु कल्याणि कन्यार्थं कमलानने ॥ आज्ञप्ता देवदेवेन बकुला लोककर्तृणा ॥ जगाम सतकैः शेषाचलादुत्तीर्य चांगना ॥ यथोक्तं श्रीनिवासेन तच्चकार तथा बला ॥ ६॥ हयमानाद्य बकुला सुवर्ण मुखरीं तदा ॥ तीर्त्वा गत्वाश्रमं प्राप्ता सखी दृष्टवती भवत् ॥ ७२॥

एतदेव विशदयति ॥ शिवालये शिवं दृष्ट्वा गता सा शिवमंदिरमिति ॥ शिवालये ॥ आलीयते संश्लिष्यते ऽत्रेत्यालयो गर्भगृहं ॥ तस्मिन्शिवं दृष्ट्वा शिवमंदिरं ॥ मदंतिजना अत्रेति मंदिरं मुखमंडपं ॥ मंदेः किस्च ॥ तदागता भूत् ॥ तत्र दृष्ट्वा वनाः कन्या कामूय मिति चाब्रवीत् ॥

 तथा संभाषिता बाला ऊचुरेवं परस्पर मिति ॥ सा वनाः कन्याः ॥ तत्र ॥ मंडपे ॥ 
दृष्ट्वा ॥ कायूयं ॥ कुत्रा ॥ किमर्थ मागता ॥ इति चाब्रवीत् ॥ पप्रच्छ ॥ तया 
बकुलया संभाषिताः पृष्टाः ॥ बालाः ॥ पंचषट्च टघ लार्भा भाः ॥ मुग्धा या ॥
पद्मया संकेतिता ॥ तद्वृत्तांतं पृष्टा अपि न वदिष्यंतीति ध्येयं ॥ ताः कन्य
का स्तामुपनीयेत्यादि उत्तन वचन लभ्योर्थः । विस्तर भीते र्न लिख्यते ॥
स्त्री बाला अपि ॥ एवं यूयंकाः ॥ कुत्राः ॥ किमर्थ मागताः ॥ इत्यब्रुवन् ॥ एवं
परस्परं साता श्चोचुरित्यर्थः ॥ मध्यपेका वह्नी तथापि प्रयोजिकानां कर्तृ
त्वा त्रपायाद् चुरित्युक्तिः ॥ एतदेव विशदयति ॥ वयमिति ॥ कुत्रा इत्य
स्योत्तरं वयमादि सदेसंतं ॥ द्वितीयस्योत्तरं ह्यतोत्तन दिन इत्यादि केल्या
सपति मंदिर मित्यंतं ॥ इतोत्तन दिन इति ॥ वर्तमान दिनात् पृष्टतः पुनतश्च
गच्छतेह्यः श्वः चोत्तन दिनं भवति ॥ श्वो भाविगतं ह्य एव ॥ अत एव होदमुन्ना
दिना इति ॥ लौकिकः तथाच इतं गतं च तत् ॥ उत्तन दिनं चेति विग्रहः ॥ पूर्व
दिन इति यावत् ॥ अथ वाद्य सोमवानः पुष्य नक्षत्रं प्राजापत्य योगः ॥ ह्यश्च
नवितः ॥ पुनर्वसू ध्वज योगः ॥ अतो गतोत्कृष्ट दिन इत्यर्थः ॥ वस्तुतस्तु ॥
उद्योत्कृष्टयो नित वर्तमानयोनति रामे नोत् उत्तनं ॥ पूर्व दिनं ॥ सर्वोन्त
म परम मंगल मूर्ति श्री निवास दर्शनात् ॥ वर्तमान मुत्कृष्टं ॥ तव
दिव्यांगतामा दर्शनात् ॥ तुलगानूहः ॥ मूल विभुजादित्वालकः ॥ पद्मावत्याः ॥
समीपं च । समीपमेव ॥ ७६ ॥ तं दृष्ट्वा ज्वन तापेन शयाना निजमंदिरे ॥
पद्मावतीति शेषः ॥ तच्छां त्यर्थं वयं प्राप्ता अभिषेकार्थ मागताः ॥ प्राप्ताः ॥
नाहः प्रकर्षेण प्रत्यमिताः ॥ आप्त प्रत्य मितौ स मा वित्यमनः ॥ अभिषेकार्थं
वयमागताः ॥ ज्वन तापेन अयमे संकटं प्राप्त मित्यत्रोक्त प्रकारेण बलव
च्छ्री निवासचोदित संमोहनादि पंचबाण पंचबाणाति विद्ध हृदयतया
संतप्त सूर्मि संताप समज्वन संतापेनेत्यां तरं गिकार्थः ॥ कोसौ किनात
नरूपीच भवद्भिः संगतः कुतः ॥ इति ॥ भवद्भिः भवतीभिः ॥ संगतोसौ
किनात नरूपीकः ॥ पूर्वो अपूर्वोवा ॥ द्वितीये पूयमंतः पुनगतानार्थः ॥
पुनं चाभेयं किमंतः किनासश्च बाह्यः ॥ तेन भवत्संग मो बहिर्भवेत् ॥
अतो वो बहिर्गमनं कुतः कस्मान्नि मिन्तात् ॥ कुतश्च तद्दर्शनेपि ॥ तस्या
३ ज्वन तापः कुतश्च ज्वनतापेपि भवतीनामत्रागमन मित्यर्थः ॥ काखुत्य
स्योत्तरं कश्चि दिति ॥ अज्ञान प्रकार विशेषः ॥ अपूर्व इति यावत् ॥ कुत
इत्याद्यस्योत्तरं सहिता इत्यादि ॥ ८० ॥ पुष्पापचयनं कर्तुमिति ॥

अ. पु. द्वितीयस्योत्तरं अस्माभिरिति आदि उत्तर दिङ्मुख इत्यंतं ॥ अपूर्वपुरु वे.भा.
षेणाकन्याभिर्मिन्नादिति ॥ तृतीयस्योत्तरं गत इत्यादि अंगता इत्यंतं ॥ ८

शिवालये शिवं दृष्ट्वा गता सा शिव मंदिरं ॥ (द्रष्टुमागता नाज मंदिरं) ॥
तत्र दृष्ट्वा वनाकन्याः काम्यमिति चाब्रवीत् ॥८३॥ तया संभाषिताबाल्या
सु चुनेवं पनस्पनं ॥ कन्याः ॥ वयमाकाश्या नाजस्य सन्निधान गताः सदा ॥
८४॥ इतोन्तर दिने कश्चित्पुरुषः तुनगारुहः ॥ पद्मावत्याः समीपं च
संप्राप्तो मन्मथाकृतिः ॥ ८५॥ तं दृष्ट्वा ज्वरतापेन शयाना निजमंदिरे ॥
तच्छांत्यर्थं वयं प्राप्ता अभिषेकार्थमागताः ॥८६॥ इति तद्वचनं श्रुत्वा
वकुला वाक्यमब्रवीत् ॥ कोसौ किनातरूपी च भवद्भिः संगतः कुतः ॥
८७॥ वदध्वं कन्यकाः सर्वा स्तद्वृत्तमखिलं मम ॥ कन्याः ॥ सदृताः
पद्मावत्या च कदाचिद्वनमागताः ॥८८॥

इति प्रश्नोत्तर विवेकः ॥ तद्वृत्तमखिलं विस्तरेण संपूर्णं ॥ अस्माभिः
कथितं तेन अवाच्य वचनं रुषा ॥ अस्माभिः विचित्रः पुमानागत इति
कथितं ॥ अथ तया प्रेषिताभिरस्माभिर्नेत्रसंज्ञया हृष्यकृते वासः ॥ किं कुलं
किं गोत्रं कस्ते माता कस्ते पिता किं ते कार्यमित्यादि श्रीपद्मोक्तं तस्मै
संदिष्टं ॥ अथ तेनोक्तं सर्वं श्रुत्वा तेनापि तस्याः किं कुलादिकमिति पृ
ष्टाभिरस्माभिः पद्मयोक्तं कुलादिकं सर्वं संदिश्य पद्मोक्त्या नीत्वा शी
घ्रं गच्छ गच्छेति निष्ठुरं कथितं ॥ अथ तेन ॥ आः किमेतत्साधुनाग
नेत्रसंज्ञया — किमेतत्कुलादि विचारः ॥ किमेतन्निष्ठुर वचनमिति
रुषा तेन अवाच्य वचनं ॥ वकुले लज्जावहं वचनं कथितं तच्छ्रुत्वेत्या
दि स्पष्टं ॥ हरनयेनेनः मूर्छितेव ॥ ततः किमित्यत आह ॥ गत इति ५
मूर्छामिति ॥ स्मरशरानाहत तया शति शकाहतेव मूर्छामुपागमे
त्यर्थः ॥ ताः कन्यकाः ॥ मुग्धाद्याः ॥ तां मूर्छितां पद्मां यानेउपवे
श्य दुह्यनाजपुरं जग्मुः ॥ तदा वयं बालाः स्वकं स्वकं वेश्म जग्मि
म ॥ तामागतामिति ॥ आगतां सुतां पद्मां यानगतामेवोद्धृत्वां तगृहं
प्रविश्यांके निधाय ॥ आत्मसुतां पनमात्म प्रेरणयैव भुविप्रसूतां ५
पद्मा स्वयमेव स्वेच्छयैव दुहितरं सुतां प्रति चिंतामुपागम्य ॥ मदधृष्
प्रेरक श्रीहरिप्रेरणाय आत्मसंतोषेण च मदीय यज्ञभूमौ प्रसूता ॥

भा.पु. तदेयं सुता बहुकीर्तिसुखदेत्यंबना वाणी बलेनच मया लालिता॥अतः दैन्या
श्रीकृ निवेव शनणा मिति आलोच्य बाल नक्षा नाम नक्षा नानायणा व
र्मादि मन्त्रैः गवाश्व धूळि श्री पादनेण्वादि भीन क्षाम कनोत् ॥ कृते
प्येवं न शांतिः॥ यथा विष्णु नक्षां कनोति तथा तथा धिको भूज्वनसं
तापः॥ अथ दुर्निवार्येयं किं वा भविष्यतीति भीतः॥ मुदाहीनं ॥अ
प्रसन्नं ॥ अभाषणं अवचनंच मुखं पश्यन् ॥ दीन इव सुकृतदनिद्र
इव नुनोद ॥ अश्रु मुमोच ॥ अयं भावः ॥

पुष्पापचयनं कर्तुं आन ०धास्तद्वतां तने ॥ तत्र कश्चित्पुमान्यातो
विचित्र तुनगगानूढः ॥ ८९॥ अस्माभिः कथितं तेन अवाच्य वचनं
रुषा ॥ तच्छ्रुत्वा तनयानाहो रुष्टा वचन मब्रवीत् ॥९०॥ तयोः
कलहाऽपन्नः कदते ताडितो नृपः॥ निपपात तदाश्वस्तु शिला
भिर्हत चेतनः ॥९१॥ स घोटकं परित्यज्य जगामोन्तन दिङ्मुखः॥
गते किनाते कमलोद्भवा बला मूर्च्छामुपागम्य पपात भूमौ ॥९२॥
ताः कन्यकास्ता मुपनीय याते जग्मुः स्वकं नाजपुनं वयं तदा ॥९३॥
तामागतां यातगतां सुतां नृपः चिंतामुपागम्य नुनोद दीनः॥
अंके निधायाल सुतां प्रपश्यन्मुखं मुदाहीन मभाषणांच ॥९४॥

एतादृक् दुहितृलालने ऽदृष्ट बलहीनः॥ यतो नाहं क्षीणाभिधेनी पिजन
कः इति॥ अत्र मध्ये॥ अविश्वासस्तु विप्राणा मित्यायुक्तन वचनानुसारे
ण लेख्यः संदर्भ शेषोस्ति विस्तन भमादुपनम्यते॥ तथापि किंचित्लि
ख्यते॥ अथै तस्मिन्समये तोंडिमान् पद्मां ज्वनतापमूर्च्छितां नुदंतं
नाजानंच दृष्ट्वा खिन्नमना दैवज्ञकुलाचार्य प्रधानान् ॥ अमात्य वैद्य
सामुद्रिक शांति पाठक प्रहाना धक निर्यदानिन आहूय यूयं अस्मा
कं प्रत्ययिता अपि कुन आगामि पद्मा योगक्षेम पर्यालोचना नकृतेति
विचानितवान् ॥ अथाह दैवज्ञ कुल गुनुः ॥ पनमादनेण सूक्ष्मे स्ति
कमाकृत चने वास्माभिः इति ॥ सत्यं ॥ उक्तोभ्युदयः लोकभर्ता पाणि
ग्रहणमिति॥ सेदानीं प्राण संशय मापन्ना किमेत दिति कथं ब्राह्म
णानां वचसि अस्माकं विश्वास इति ॥ मास्तु विश्वासः॥ यथा शा
स्त्र मुक्तं कालबला-बलु दैवादन्यथा जाते किं कर्तव्यं ॥

भ.पु. इदानीमिव राजकुले दैवपर्यालोचनाधिकारः ॥ प्रत्यर्पित इति ॥ राजवैद्यं भ
कृतानादरात्कुपित आह ॥ अथ वैद्यः ॥ कुपितायाः शांतर्नाडी संचारो ६
दृश्यते ॥ बहिर्दर्शने अशांतिप्रभा इतीव इवेति ॥ कोपशांतिनाकांक्षा
प्रवृत्तौ ॥ सा च कांक्षित ज्ञाने तच्च वचने तच्च कोपशांतौ इति चक्रका ॥
तस्मात्तमयौषधं तूष्णीं अशक्ये प्रयत्नो न कार्यः ॥ इति ॥ अथ
सामुद्रिकाः ॥ ममाभ्युदयमेव सूचयति लक्षणशास्त्र शकुनः
शपथः सत्यः सामुद्रिकमुपश्रुति ॥ उपयाचनमादेशः संभवंति
कलौ क्वचिदित्युक्त ॥ कलिधर्म दशा दन्यथा जाते किं कर्तव्यमिति ॥
ब्राह्मण संपत्ताज्ञा विभवार्था न तदर्थ फलप्रदेति ॥ सर्वान्तना
दृतवान् ॥ अस्मिन्समये बन राजो ॥ अहो किमेतत् ॥ महाननर्थः ॥
अहमेकपादेन स्थित्वा अंजलिं कृत्वा ॥ शिरसा मन्य सर्वान्याचे ॥
भवद्भिः सर्वैः पश्चा दृष्ट्वा राजकृतानादरमगणय्य तद्योगक्षेम,
य देवता प्रसादनं पूर्वस्माद्द्विगुणं कल्पं तामिति क्षमापयामास ॥
अथ ते च स्वतः प्रवृत्ताः पुनः प्रावर्तंत ॥ अथाकाशराजा आलोचि
तवान् ॥ दश दीपसमो वह्निः दश वह्नि समोर्यमा दश सूर्यसमो
वैद्यः दश वैद्य समो द्विजः ॥ दश द्विज समो विप्रः दश विप्रसमो
गुरुः ॥ एते अभ्यांतबलदा देवाः ला भो हि भेषजं इति ॥ अथास्माकं ॥
दैवतो गुरु राजकृतानादरात् दैवपर्यालोचने भग्नमनाः भूमौ
चिरावासाच्च सूक्ष्मं न भासते चातो ज्योतिर्मंडलस्थो गुरुराकार
यितव्य इति ॥८४॥ ततः किमित्यत आह ॥ किं वा भवेदिति ॥

किं वा भवेन्मे दुहितुर्दुरासदा विभीषिका विश्व विनाशकाश्च ॥
तेषां विनाशं स हि जानते गुरुस्तमाह्वय त्वम सुतेन शीघ्रं ॥८५॥
तद्वाक्यमाकर्ण्य गुरुर्धराततं शीघ्रं प्रपन्नो नृपमंदिरं च ॥
प्राप्तं गुरुं प्राणमिवागतं नृपः प्रायेण पुण्यं परिपक्वमागतं ॥
दत्वासनं रत्नमयं समर्च्य सुसाधनैः साध्य सुपुष्प भोजनैः ॥
कृतातिथ्यं विप्रवरं बभाषे सुतानिमित्तं मगनाधिपो नृपः ॥
तद्वाक्यमाकर्ण्य गुरुः सुराणां प्रशातयन्वाक्यमुवाच भूमिपं ॥
दुहितुस्ते च संप्राप्तं निमित्तं शृणु भूमिप ॥ अनुकूलाः ग्रहाः सर्वे
तव पुत्र्या नृपोत्तम ॥ किंतु नित्य ग्रहबलं किंचिद्भ्रांति करं नृप ॥८६॥

भ॰पु॰ अमुकगोत्रायेत्यादि वृणीध्वमित्यंतं तं वनणवाक्यं वनपूर्वकं वें॰मा॰
प्रत्यङ्मुखैश्चतुर्भिश्चतुर्भिः नःभय पुनोहितमुखै ब्राह्मणैः त्रि ११
नःच्यानणं कान मित्वाथ कन्यादानमकनोदिति प्रथम खंड वाक्या
र्थः॥ एतदेव विशदयति॥ कन्यादानमथाकनोदिति प्रथमवाक्यां
शेन सह पुनःषोन्तमेत्यंतेन महावाक्येन॥ यावत्खंडवाक्य योज
ना सिध्यतीति सा क्रियते॥ अथ भूषणानंतनं साक्षात्प्रत्यक्षो
बृहस्पतिः गुरुनाचार्यः॥ अत्रिगोत्रसमुद्भूतामित्यादि आकाश
भूपतेः मम पुत्रीं कमललोचनां कन्यां त्वमंगीकुरु प्रतिगृह्णातु
भवानित्यर्थकं कन्यादानांगं दातृवाक्यं नाज्ञा वाचयित्वा धाना
निषेचयामास॥ इति द्वितीय खंड वाक्यार्थः॥ महानाज्ञा एव
मुक्ते धानासेचनानंतनं नलांबनं मध्ये प्रदेशे वनसमीपे प्राङ्मुखे
इधन् वसिष्ठः प्रपौत्रस्य ययातेमित्यादि पुनःषोन्तमेत्यंतं प्रति
गृह्णीम इत्यर्थकं गृह्णीष्याम इति प्रतिगृहीतृवाक्यं वनमंत्रभाष्य त.
स्वयमुदा जहानेति तृतीय खंड वाक्यार्थः॥ एवमुक्त्वा कन्यां सम
भिमर्श्य श्रीनिवासेन ग्राहयामासेत्यर्थः॥२१८॥ निगमयति॥
कन्यावनणमित्यादिना॥ मधुपर्कांगतया पूर्वं पूजितमपि यतः
कन्यादानपनायणः कुत्रचिन्मंत्र तंत्रपूजाद्या ...
संकोचमसहमानः अलभ्ययोगोयमित्येनु संधाता अतः पुनः
कन्यादानांगतया वस्त्रगंधानुलेपनैर्जगन्नाथं पूजयित्वा ब्राह्म
णैः कन्यावनणमुच्चार्य उक्तार्थं कन्यादानमकनोत्॥ दानांग
धानासेचनं तदंगदानोदक प्रक्षेपणं च कृत्वा हे पुनःषन्तम.
न केवलं मया कन्या दत्ता अपितु कन्यादानं दानसुकृतमपि
मया दत्तं कृष्णार्पणबुद्ध्यार्पितं तदपि पालयेत्युवाचेत्य खंडा
र्थः पर्यवस्यति॥ यद्वा एकस्य कन्यावनण मुच्चार्येत्यस्यावृत्ति
मभ्युपगम्य प्रथममेकवानं कन्यावनणमुच्चार्यात्रिगोत्र
समुद्भूतामित्यादि नृपोत्तमेत्यंतमेकवानं॥ पुननपि कन्यावनण
मुच्चार्योक्तनीत्यैकवानं कन्यादानं मयादत्तमित्यादि नैवं त्रि
वानं कन्यादानमकनोदिति योजना॥ प्रथमयोजनायां दातृ
प्रतिगृहीतृ वाक्यान्यवधानेन निर्वचनं द्वितीययोजनायां
न्यवधानेनेति भेदः॥ अयमभिप्रायः॥

वरणस्य पूर्वं क्रियमाणत्वेऽपि वरपूर्वकं साक्षान्न कृतत्वादकामानुक्तिः ॥ निरीक्षणस्यापि तथा ॥ अत्रिगोत्र समुद्भूतामित्येतत्तु वरणवाक्यं वरपूर्वकत्वाभावाद्वृणीतेनप्रयोगाद्ग्रहीतुः प्रयोगाच्च ॥ प्रतिगृह्णीतु प्राङ्मुखत्वदिङ्नियम सूचनार्थमध्ये नत्वां वरं दध्मित्युक्तं ॥ यद्यपि दानफलस्य नाजमात्रगामित्वात्स्वमंगीकुर्विद्युक्त्या प्रतिगृह्णामीति प्राप्तं तथापि अनादितो तिचतिशय नमापनिग्रहवतः प्राप्त्याभावादेतत्फलस्य ब्रह्मादिगामित्व सूचनाय गृह्णीष्यामइत्युक्तं वसिष्ठेन ॥ कन्यादानं मयेत्यादिनु कृतस्य कर्मणः कृष्णार्पणायेति ॥

कन्यावरणमुच्चार्य कन्यादानपरायणः ॥ पूजयित्वा जगन्नाथं गंधवस्त्रानुलेपनैः ॥२१६॥ कन्यादानं मयादत्तं ब्रह्मण्ये पुरुषोत्तम ॥

कात्यायनीकायां ॥ अस्मै वृणीमह इति वरपक्षा वृणीतवै ॥ वृणीध्वमिति दाताच सर्वत्र वरपूर्वकं प्रदानेष्येव मुभयोर्वरणं संप्रयुज्यते ॥ प्रत्यङ्मुखा वरयंति प्रतिगृह्णंति प्राङ्मुखाः ॥ वृणीमहे वृणीध्वमिति ब्रूयादेवं त्रिः प्रयुज्यतेति पारिजाते ॥ एवं सप्तपद्यार्थे सति एतत्कथाकथन श्रवणानुष्ठान ध्यान नाटनाद्युपक्रमकतयात्र प्रचन ग्रन्थ याचानाः क्रमेण लिख्यंते ॥ भूषणेत्यादि ॥ अथ दक्षिणेन्तनतः बृहस्पति वसिष्ठ शिष्यैर्वृतांतः पटपूर्वनार्यौ पत्यङ्मुख वर समीपे वसिष्ठमुखाश्च्यवानः प्रत्यङ्मुखाः ब्राह्मणाः वासिष्ठेंद्र प्रमदाभरद्वसुत्यार्षेय प्रवरान्वित वसिष्ठगोत्राविर्भूताय ययातिवर्मणः प्रपौत्राय सूनसेनवर्मणः पौत्राय वसुदेववर्मणः पुत्राय वेंकटनाम्ने वराय ॥ आत्रेयार्चनानस श्यावाश्य त्र्यार्षेय प्रवरान्वितात्रेयगोत्राविर्भूतां सुधर्मवर्मणः प्रपौत्रीं सुधर्मवर्मणः पौत्रीं आकाशराज वर्मणः पुत्रीं पद्मानाम्नीं कन्यां धर्मप्रजा संपत्त्यर्थं वृणीमहे इति वरणे कृते ॥ अथापरनार्यौ प्राङ्मुख पद्मा समीपे बृहस्पति मुखाश्च्यवानः प्राङ्मुखा वरपूर्वकं वासिष्ठेंद्र प्रमदे आदि धर्मप्रजा

भ.पु. संपत्स्यर्थमित्यंतमनूद्य वृणीध्वमिति प्रतिवचनं चक्रुः॥ वें.मा.
एवं निबानं वचनीकृते वचन काले तिनस्कनिष्माः पश्चिमनाशौ प्राङ्मु ११.
खीं कन्यां इदानीं तिनीक्षणे पूर्वनाशौ प्रत्यङ्मुखीं प्रतिष्ठाय पूर्वं
पूर्वनाशौ प्रत्यङ्मुखं वरं इदानीं पश्चिमनाशौ कन्यापूर्वं प्रदक्षिणं
परिवृत्य प्राङ्मुखं कृत्वा प्रतिष्ठाय मंगलाष्टक वाचन पूर्वं ज्योति
र्विदा सुमुहूर्तो यं तुलग्नमिदं तदेव लग्नं सुदिनं॥ तानाबलं विद्या
बलं स्मनमीत्युक्त्वा सुमुहूर्ते दत्ते सप्रस्तिनस्कनणीं उदङ्मुखगदशा
मुदगपसार्य कन्यावरौ परस्पर माननयोगुड जीनका नवकिनतः
परस्परं तिनीक्षणं चक्रतुः॥ परस्परं शिनसौ नक्षतानोपर्णवा॥
कन्यादानानंतरं निनीक्षणमिति केचित्॥ अथ अतिवासः पद्मा
याः भ्रुवोर्मध्यं दर्भाग्रेण परिमृज्य दर्भं तिनस्याप उपस्पृश्योप
विष्टे॥ कन्याया सह ब्राह्मणाः पुनं ध्मश्च तावाशीर्भिनभिननंदुः॥
अथाकाशे दक्षिणे सपत्नीकः स्वदन्तालंकार मात्रालंकृतया पद्म
या सह उपविश्य ॐ पुण्याहं भवंतो ब्रुवंतु ॐ शुद्धिं भवंतो ब्रुवंतु।
ॐ ऋद्धिं भवंतो ब्रुवंतु इति ब्राह्मणान्वाचयित्वा अथ ब्राह्मणैरपि ॐ
पुण्याहं ॐ शुद्धिः ॐ ऋद्धिर्भवतु इत्युक्ते कन्यायाः संलापः सौ
मनस्यं भवतु॥ अक्षताः शुभाः संतु दीर्घमायुरस्तु शांतिः पुष्टिस्तु
ष्टिश्चास्तु तिथि करण मुहूर्त नक्षत्र लग्न संपदस्तु इत्युक्त्वा कुश
हस्तः प्राणानायम्य देशकालौ संकीर्त्य अमुक प्रवरामुकगोत्रामुक
शर्माहं मम समस्त पितृणां निरतिशयानंद ब्रह्मलोकावाप्त्यादि
कन्यादान कल्पोक्त फलावाप्तयेऽनेन वरेणास्यां कन्यायां जनिष्य
माण संतत्या द्वादशावरान् द्वादश परान् पुरुषांश्च पवित्रीकर्तुं
आत्मनश्च श्री श्री निवास प्रीतये मिथः समयनरूप गांधर्व वि
वाहांग विधिना कन्यादानं करिष्य इति कुशाक्षत जलेन संक
ल्प्य वरं गंधवस्त्राभिरभ्यर्च्य तत्पूजावशिष्ट गंधेन कन्याबाहू
आलिप्य तयोर्हस्ते हिरण्यं निधाय सपत्नीको वधूवराभ्यां सहो
त्थाय कन्यां संप्रगृह्य॥ कन्यां कनक संपन्नां कनकाभरणैर्युतां॥
दास्यामि विष्णवे तुभ्यं ब्रह्मलोक जिगीषया॥ विश्वंभरः सर्व
भूता साक्षिणः सर्वदेवताः॥ इमां कन्यां प्रदास्यामि पितॄणां
तारणाय चेत्युक्त्वा दक्षिण स्थित पत्न्या संततां क्रियमाणां पूर्वां

भ.पू. र्चित कलशपूरित शुद्धोदक धारां आसिषेच ॥ एवं कन्यादानांगां वें.मा
भो धारा सेचनानंतरं कन्या तारयतु पुण्यं वर्द्धयतु ॥ शांतिः पुष्टि ११.
स्तुष्टिश्चास्तु पुण्याहं भवंतो ब्रुवंतु ॥ अमुक प्रवरेत्यादि मम सम
स्तेत्यादि मध्यक प्रीतये इत्यंतमुक्त्वा आत्रेयार्चनानस श्यावाश्व
श्यार्षेय प्रवरान्वितात्रेय गोत्रा विभूतां इत्यादि कन्यामित्यंतमुक्त्वा
वासिष्टेंद्र प्रमदाभरद्वसुश्यार्षेय प्रवरान्वित वसिष्ठ गोत्रोद्भवाये
त्यादि अमुक वेङ्कट नाम्ने वरायेत्यंतमुक्त्वा श्री धनरूपाय श्री
रूपिणीं प्रजापति देवत्यां निरतिशयानंद ब्रह्मलोकावाप्त्यर्थं
तुभ्यमहं संप्रददे इति सहिरण्य वरहस्ते कन्याहस्तं निधाय
सश्री तुलसीदलं साक्षातजलं दानोदकं पत्न्या स्वहस्ते धाराक्र
पेण क्षिप्तं धारानुरूपेणाक्षिपत् ॥ प्रजापतिः प्रीयतामिति मनसा
स्मरन् कन्यां प्रतिगृह्णातु भवानित्युवाच ॥ अथ वरः ॐ स्वस्ती
त्युक्त्वा कन्यां संस्पृश्य ॥ क इदं कस्मा अदादित्यादि वृष्टिरसि द्यौस्त्व
ददातु पृथिवी प्रतिगृह्णातु इत्यंतमुक्त्वा प्रतिगृह्णामीत्युवाच प्रजा
पतिमस्मरत् इत्येवं कन्यातारय त्वित्यारभ्य प्रतिगृह्णामीत्यंतमुक्त्वा
त्रिवारं दत्ते प्रतिग्रहे च सति दाता गौरीं पद्मां कन्यां इमां कृष्णा यथा
शक्ति विभूषितां ॥ गोत्राय वर्मणे तुभ्यं दत्तां कृष्णा समाश्रय ॥ पद्मे॥
ममाग्रतो भूयाः पद्मे मे द्विपार्श्वयोः ॥ पद्मे मे पृष्ठतो भूया
स्त्वद्दानान्मे क्षमाप्नुयां ॥ मम यत्स्थ जोद्भूता पालिताकाश भा
षया ॥ तुभ्यं कृष्णा मया दत्ता पुत्रपौत्र प्रवर्धिनी ॥ धर्मे चार्थे च
कामे च नातिचरितव्या इत्युवाच राजा ॥ श्रीनिवासो नातिचरि॥ति
चामीति ॥ अथ पुनो धसौ वधूवरौ आसने प्राङ्मुखमुपवे
श्य स्वर्णपात्रे पूर्णार्चित कलशोदकमासिच्य सपत्नीश्या
स हिरण्य पवित्राया सकुशदूर्वा पल्लवया औदुंबर्या द्रीथा
शाखयाऽब्लिंगाकैर्मंत्रैर्वधूवरावभ्यसिंचतां ॥ ७ ॥ अथान
योन्यक्षतारोपणं विधिवदास ॥ अथ श्रीनिवासः ॥ स्वशेखर
पुष्पमेकमादाय क्षीरघृतेनाप्लाव्य पद्माभाले तिलकं निदधे ॥
पद्मापि स्वशेखरस्थ पुष्पदलमादाय क्षीरेणाप्लाव्य वेङ्क
ट ललाटे तिलकमक्षिपत् ॥ अथ पद्मा पतिकंठे मल्लिका
चंपक मालां निदधौ ॥ वेङ्कटस्वाम्यपि पद्माकंठे ॥ ७ ॥

मुनीनामंजलिपुटे राजा रत्नाक्षतान्ददौ ॥३१७॥ ते वेदमंत्रैः
जगदीश मूर्द्धनि मुक्ताक्षतान्वेदविदः प्रससृः ॥ तदा भव
-त्तत्र महोत्सवो नृप आकाशराजालय वासिनांच ॥३१८॥

अथ विप्र वेदमंत्रैः नारी राशास्यक्षतान्प्रससृ रित्याह ॥ मु
नीनामिति ॥ अथ राजा सपुरोहितो मुनीनामंजलिपुटे नानार
त्नाक्षतान् ॥ स्व सम प्रमाण मुक्तादि नवरत्न संमिश्रान भग्नाग्रा
न्घृत कुंकुम मंगलान् शालि तंडुलान् ददौ ॥ मुक्ताक्षतान् ॥ त
न्मिश्रान्प्रससृः प्रसारितवंतः ॥ तदेति ॥ महोत्सवः ॥ परमानंद
जनक व्यापारः ॥ देवानां ऋषीणां गंधर्वाप्सरसां ॥ आकाशराजा
लय वासिनांच पुरोहितादीनामभवत् ॥ देवाः दिव्य पुष्पाणि
विपदंगा जलकणैः सह मेघे कृत्वा वायु वशेन नानायण पुनोपा
दु नि दुंदुभिं नादयंतो ववृषुः ॥ ऋषयः साधुसाध्विति साधु
वादानूदुः ॥ ननृतु श्चाप्सरस्संघा गंधर्वाश्च जगुः कलं वाच
स्पति वसिष्ठाद्या अति चित्र विचित्र श्री भू समेत श्रीनिवास
सौंदर्य शोभातिशय दर्शन संमुग्ध चित्ततयाऽदेहाभिमाना
व्यत्यस्त वाग्व्यापारा आसन् इति ॥ मंत्रास्तंत्राणि च यद्वा मङ्गा
बभूवुरिति भावः ॥३१८॥ कंकणं बंधयामास वासुदेव करां
बुजे ॥ बृहस्पतिः कन्याजेन पद्मावत्याः करांबुजे ॥ बृहस्पतिः
वासुदेव करांबुजे पद्मा हस्तेन कंकणं कौ
तुक सूत्रं बंधयामास ॥ विश्वे ताते सवने इति मंत्रमुच्चरन्
दक्षिणे बंधनं कारयामास ॥ पद्मावत्याः करांबुजे ॥ कन्याजेन
वेंकटपति कन्याजेन बृहत्सामेत्युच्चरन् वामे बंधयामासेत्यर्थः ॥
ततः पुरोधाः विवाह व्रत रक्षणाय गणपतिं स्मरन् आविवा
ह व्रत स्थापि पंच पंचा खंडित पूगीफलानां तयोरन्तरीयां
तयोर्बंधनं चकार ॥ अथ तावपि बबंध ततो वधूवरौ रमां पार्वतीं
शचीं च प्रार्थयेतां ॥ अथ तिथ्यादि संकीर्त्य चतुर्दिन विवाहव्रतं करि
ष्ये इति संकल्प्य रोहिणी सोमरूपौ भूत्वा दाक्षायणीमपूजयेतां ॥
स्वीयं तु मिलितं राजा मांगल्य सूत्रमुत्तमं ॥ श्रीनिवासेन देवेन कृत
वान्स पुरोहितः ॥

 स पुनो हितो राजा देवेन श्रीनिवासेन कारितेन मांगल्य तंतुना 
स्वीयं मांगल्य सूत्रं कृष्ण मणि मालां ॥ कनस्पृष्टं ॥ ब्राह्मणानां 
अरूंधती वसिष्ठादि ब्रह्मणी ब्राह्मणानां तस्य वचनात्ः कनस्पृ
ष्टं ॥ मंत्र निमंत्रितं ॥ मांगल्य तंतुनेत्यादि मंत्र मुच्चरन् ॥
सावित्री भवेत्यादि मंगळ दायिनीत्यंत मारास्य सूत्रं कृष्णम
णि मालां स नत्न मुक्ता प्रवाळं स्वर्न मयीं कंठे पद्मावती कंठे
गोविंदः बबंध ॥ अथ श्रीनिवासो देव दुर्लभैश्चतुर्विधाभरणैः
स्वीयैः पद्मां भूषयामास अथ सा पद्माष्ट मंगळ द्रव्य पूर्णानि
ऽपायनानि त्रिदेवता प्रीत्यर्थं सुवासिनीभ्यो ददौ ॥३२२॥
अत्रेदं बोध्यं पद्मायाः सहजं मांगल्य सूत्रं पूर्व मेवैक मासीत् ॥
अन्यत्काल्यायनी पूजां धनश्या बद्धं द्वितीयं च ॥ अन्यानिच
साविज्ञानं धत्यादि दन्तानीति नातो मंगळ सूत्र बंधनं विना कथं
कन्या दान मिति शंका युक्तं च पूर्व मेव सोमादि विवाहात् इति ॥

कंकणं बंधयामास वासुदेव करांबुजे ॥ बृहस्पति
करांब्जेन पद्मावत्याः करांबुजे ॥ ३१९ ॥
स्वीयं तु मिळितं राजा मांगल्यं सूत्र मुत्तमं ॥
श्रीनिवासेन देवेन कृतवान्स पुनो हितः ॥ ३२० ॥
बबंध सूत्रं गोविंदः कंठे मंत्र निमंत्रितं ॥
सावित्री भव कल्याणी बहु पुत्रवती भव ॥ ३२१ ॥
सर्व लोकस्य जननी भव मंगळ दायिनी ॥
ब्राह्मणानां कनस्पृष्टं राज्ञस्तस्य महीपते ॥ ३२२ ॥ श्री ॥

॥ चतुःश्लोकी श्रीमद्भागवतं ॥

अहमेवाऽसमेऽग्रेनान्यत् सदसत्परं।
पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहं ॥१॥
ऋतेऽर्थं यत्प्रतीयेत नप्रतीयेत चात्मनि।
तद्विद्यादात्मनो मायां यथा भासो यथातमः॥२॥
यथा महांति भूतानि भूतेषूच्चावचेषु च।
प्रविष्टान्यप्रविष्टानि तथा तेषु नतेष्वहं ॥३॥
एतावदेव जिज्ञास्यं तत्वजिज्ञासुनात्मनः।
अन्वयव्यतिरेकाभ्यां यत्स्यात् सर्वत्र सर्वदा ॥४॥

भ·पु वैवाहिकं समाप्याथ जग्मतुर्होममंडपं ॥ वसिष्ठः कारयामास वें·मा·
पद्मावत्या स्त्र्यंजलार्पितं ॥ मुनिभिर्वेदविद्भिर्लाजहोमं पुनोदितः ११
यजुःशाखोक्तमार्गेण जुहावाग्नौ महामतिः ॥ सार्धपद्यमेकं वाक्यं ॥
वैवाहिकं प्रायोदाग्रधिकानिकं विवाहमंटपे भवं वधूकुला
चार्य प्रधानकं कर्म जातं समाप्य वधूवरौ पूर्वोक्त लक्षण ल
क्षितं होममंटपं उत्तरतः स्थितं जग्मुः ॥ अथ वसिष्ठः अति
शयेन तपोविद्यादि वसुमान् वसिष्ठः कुलाचार्यः यजुःशा
खोक्तमार्गेण अग्नौ ॥ पूर्वं सायमौपासनं हुत्वा तम समानोपित
प्रत्यवरूढ पूर्व विवाहगृह्याग्नौ जातवेदसमिध्मेन प्रजापतिं
प्रजापतिमाघाराबाज्येन ॥ त्रिनग्निं पवमानं प्रजापतिमाज्येन
स्वयं जुहाव ॥ अथ पाणिग्रहणादि गृह्योक्त तंत्रेण महामतिनपि
वसिष्ठः वेदविद्भिः विश्वामित्र बृहस्पत्यादिभिः ॥ अनुमोदितः ॥
पद्मायाः अंजलार्पितं ॥ त्रयाणामंजलीनां समाहार स्त्र्यंजलं तस्मि
न्नर्पितं ॥ त्रिवारं पद्मांजलौ भ्रात्रा वसुदानेन निरूप्तं लाजाख्यं
हविर्यथा स्यात्तथा कृत्वा लाजहोमं तन्नामकं कर्म भार्यात्वाय
श्रीनिवासेन कारयामास इत्यर्थः ॥ द्वित्रिभ्यामंजलेर्नितिटच् ॥
अभेदात्समुदायेत समुदायिषु पर्यवसानं ॥ नित्यसापेक्षत्वा
श्री त्समासः ॥ गवां कोटिसहस्राणीति ॥ व्याख्यातमेतत् ॥ वस्त्राणा
मिति ॥ निचयं कृत्वा राशिं विधाय यद्यपि प्राणाभिष्टं तत्र तेभ्यः
पृथक् पृथक् दत्तवान् ॥ अथ सप्तपदीमाक्रम्य उत्तरीयांत
ग्रंथिं विसृज्य वध्वा सहारुंधतीं सप्तर्षीन् ददर्श श्रीनिवासः ॥
एवं महोत्सव इति ॥ अथ सप्तर्षिदर्शनानंतरं ॥ पुनर्वेदिमुपविष्टः ॥
श्रीनिवासः ॥ अथ कल्याणार्हणं पूर्वं लक्ष्मी स्वयमुत्थाय स्वर्ण
कुंभांभोभिः कांचनपतद्ग्राह प्रतिष्ठित ध्वज वज्रांकुश चिह्नव
त्पादौ मंत्रवदभिषिच्य वस्त्रेण परिमृज्य कुंकुमरागेणानुरज्यां
जलेनार्घ्यं समर्प्याचमनीयेनाचम्य मुखे नेत्रे चांजिते अनर्घ्य
वस्त्राभरणानि अध्यावाहनिकानि दत्त्वा सुगंधि हरिचंदनेन
कृ बाहू वालिप्याक्षतान् फाले क्षिप्त्वा गंधतैलेन हृदयं नागव
ल्ली दलेन स्निग्धीकृत्य पिष्टातकमुष्टीं विकीर्य कंठे पुष्पमालां
निधाय शिरसि पुष्पाक्षतवृष्टिं विधाय पूर्णफलतांबूलानि

भ·पु· पात्रे पुनतो निधाय नत्वा वामतस्तस्थौ ॥ अथ पद्मा प्युत्थाय वें·मा·
लक्ष्मी वदवृत्तिं कृत्वा दक्षिणतः तस्थौ ॥ अथ ब्रह्माण्याः ॥ ११

वैवाहिकं समाप्याथ जग्मतुर्होम मंडपं ॥ वसिष्ठः कारया
मास पद्मायास्त्र्यं जलार्पितं ॥२२३॥ मुनिभिर्वेद विद्भिर्द्वि
र्लाजहोमं पुनो हितः ॥ यजुः शाखोक्त मार्गेण जुहावग्नौ
महामतिः ॥ तस्मिन्काले महाराजः दक्षिणां ब्रह्मवादिनां ॥
गवां कोटि सहस्राणि अश्वायानाम युतं तथा ॥ वस्त्राणां
निचयं राजन् विप्रेभ्यो दत्तवान्पृथक् ॥ एवं महोत्सवं
स्तत्र समभूद्दशमी दिने ॥२२५॥ वधूवरौ प्रतिष्ठाप्य
भोजनार्थं तनेश्वरः ॥ अन्नं बहुविधं सूप रस भक्ष्य सम
न्वितं ॥२२६॥ पुनो हितेन सहितो भोजनं कृतवान्हरिः ॥
आकाशराजो राजेंद्र भुक्तवान्कृष्ण सन्निधौ ॥ लक्ष्मी
समेता धरणी तथा बकुलमालया ॥ श्रीः ॥ श्रीः ॥

अथ ब्रह्माण्याः श्रीनिवासाय परितोषकाणि रथ वस्त्राभरणानि स्वस्वो
चितं प्रददुः तद्द्रव्यं तदा पर्वताधितं अथ पति पुत्रवती भिः अरुंध
त्यादि सुवासिनी भिर्नीराजित विग्रहो गंधाक्षत पूर्वक मर्चितेभ्यो
दत्त दक्षिणा फल तांबूलादिभ्यो ब्राह्मणेभ्यः स्वीकृत मंत्राशीरक्षतः
वधूभ्यां सहस्वभासा सभां भासयन्नभ्यनंदन्नास ॥ॐ॥ वधूवरा
विति ॥ अथ रात्रौ पंच दश घटिकातः पूर्वं विवाहमंटपे भोजनार्थं ॥
वधूवरौ पद्मा श्रीनिवासौ एकासने प्रतिष्ठाप्य सूपापूप रसान्वितं
बहुविध मन्नं ॥ षड्विधान्नं पत्नी हस्तेन पूर्वदत्त भोजन पात्रे परि
वेषयामास ॥ अथ श्रीनिवासः स्वपुनतः उपविष्टेन वसिष्ठेन सह
राहा चंद्रेण कानितं चंद्राभिमंतं ॥ चंद्रांतर्गत केशवाधिष्ठितं ॥ तद
धिष्ठित ब्रह्मांशेन बृहद्भानीन नृसिंहाग्नौ घृतवत्संस्कृतं अमृतान्नं
अश्नान लवणं हरिर्भोजनं कृतवान् ॥ आकाशराजापि कृष्ण सन्नि
धौ पुनतो वसिष्ठ समीपोपविष्ट गुरुणा सह भुक्तवान् कृष्णस्य
दक्षिणतः लक्ष्मी समेता स--धरणी बकुलमालया सह भुक्त
वती ॥ तत्पङ्क्त्यैव वध्वष्टकन्याः वामे सरस्वती पार्वत्याद्या अष्ट

 कन्याः॥ पुनतो यथोचितं वधूवरपक्षीयाः पुमांसः तां स्त्रियं द्रा 
ध्याः॥ अथ श्रीनिवासः उत्सवं द्रष्टुं पुनर्मिलि सभामध्ये पु 
नर्वेदिकायामुपविश्य सुखासिनो भिर्नानाजित विग्रहो दन्त
तांबूल वस्त्रे भ्यो ब्राह्मणेभ्यो आशिषो गृहीत्वा पद्मावत्यां स
हाभिनंदन्नास्ते॥ श्रीनिवासाय मंगलं देवाः प्रसन्नाः ऋषयः
साधुवादाः गंधर्वाश्च जगुः कलं॥ ननृतुरप्सरसः॥ गीतावाद्य
मृदंगेदुः॥ ब्राह्मणा आनंद निर्भराः॥ श्रीः॥ सर्वे जना लक्ष्मी पद्मा
श्लिष्ट श्रीनिवास जगन्मोहन सौंदर्य लीला संदर्शन संजाता
नंद नम्राभ्युदये लोल विलासा दोलिताः विगलित वेद्यांतर हृद
यां भोज सन्निविष्टा कौतुक वेद्यधिष्ठित लक्ष्मीपद्मा श्लिष्ट श्रीनि
वासास्तिष्ठंतीति सर्वं मंगलं॥ श्रीः श्रीः॥ ॐ श्रीमदस्मद्गुरुवर्यांतर्ग
त श्रीमन्मंगलालय विलासि गुरुराजेश श्रीभारती मुख्यप्राणा
त्मक द्रौपदी रमण भीमसेनांतर्गत कल्याण श्रीनिवासात्मक
रुक्मिणी सत्या समेत श्रीकृष्णार्पणमस्तु॥ श्रीः ॥ श्रीः॥
ॐ॥ श्रीः॥ श्रीनिवासाय मंगलं॥ अत्रेदं बोध्यं॥ ननु गांधर्व
स्यावां दंपती भवाव इति परस्पर समय युक्त इन्नलक्षणत्वेन रूप
त्वान्नोदक पूर्वकत्वं॥ केवलं परिक्षय मात्रेण स्वत्व सिद्धेः॥अस्या
पंतरंगाभि प्रायेण गांधर्व त्वमेव॥ स्वयंवरस्यान्योन्य समय
रूपत्वात्॥ अतएव दश लक्षण वनहि गांधर्व एवोक्तः॥ अत्राप्युद
क पूर्वकत्व स्यानुक्तेः कथं ब्राह्मवद्दाना सेचनादि ऋषि दर्शितोता
दान क्रम केवल मिदमिति चेन्नैवं॥ गांधर्वादीना मुदक पूर्वकत्व
मस्त्येव॥ तदुक्तं ब्राह्मे॥ युक्तंतु पाणिग्रहणं सर्ववर्णेषु सर्वशः॥
जलपूर्वंतु विप्राणा मन्येषामपि काम्यये ति॥ पाणिजाते॥ अनेन
ब्राह्मोपि विवाहः क्षत्रियादीना मुक्तो भवति॥ गांधर्वादिष
तूदक पूर्वं दानं विना स्वत्वे जातेपि अग्नि साक्षिकं पुनर्वैवाहि
को विधिः कार्य इत्युक्तं॥ गांधर्वादि विवाहेषु पुनर्वैवाहिको वि
धिः॥ कर्तव्यश्च त्रिभिर्वर्णैः समयेनाग्नि साक्षिक मिति॥ किंचा
त्रैव ब्राह्म विवाह प्रयोगं संपूर्ण मुक्त्वा गांधर्वादि विवाहेष्वेवं
कुर्यात मित्युक्तं॥ नामायणे पि॥ इत्युक्त्वा प्राक्षिपद्राजा मंत्रपूतं
जलं तथा॥ एवं दत्वा तथा शीतं मंत्रोदक पुनरुक्तामिति स्वयंवर

अ.पु. स्योदक पूर्वकत्वा मुक्तं इत्येवं ॥ ननु धर्म स्थाने कांश्य पात्रस्थ कन्यां जलेऽरणि वनां जलिं निधायेत्या द्युक्तिंन स्ति ॥ अतः कथं स हिरण्य वन हस्ते कन्या हस्तं निधायेति चेन्न ॥ तस्य दक्षिण स्थित पत्न्या क्रियमाण संतत शुद्धोदक दानांग धाना सेचन विषयत्वात् ॥ अस्य चांगी भूत दानात्मक साक्षत विच्छिन्नोदक धाना प्रक्षेप विषयत्वेन अविरोधात् ॥७॥ ननु शुद्धोदक दानांग धाना सेचन मंगी भूत साक्षतोदक प्रक्षेपणं चेति किमर्थं द्वै विध्य मिति चेत् ॥ अयम भिप्रायः ॥ महादानस्य धाना पूर्वकत्वार्थं ॥ तर्हि पाणिजातादा वेक वानोक्तेः कोभिप्रायः ॥ एकवानं धाना सेचनेपि उदक प्रक्षेपणस्य धाना पूर्वकत्व संपादकत्वात् ॥पर्नतु पौर्वापर्य कालस्य स्थूल सूक्ष्मत्व मात्रं भेदः ॥ननु धानायाः कन्या हस्त पर्यंतत्वं कुतः ॥ अमोहमस्मि सात्वं सात्वमस्य मोहं ॥ द्यौनहं पृथिवी त्वं सामाहमृक्त्वं तावेव विवहा वहै ऋच्य ध्यूटं सामगीयते ॥ वृष्टिनसि द्यौस्त्वा ददातु पृथिवीत्वा प्रति गृह्णातु इत्यादि मंत्र लिंगात् ॥ दत्तां विप्र समाश्रयेति स्मृतेश्च ॥ नममेति स्वत्व त्यागा भावाच्च ॥ वन वनणोक्तेश्च वन प्रतिगृहीत द्रव्यस्य गृह गृहिण्य पन नामक पत्नी पात्रत्वाच्चेति ॥ अन्येषाम र्थांतने तात्पर्याद विरोधा दनुमत मेवेति ॥ अतएव पृथिवीत्वा प्रतिगृह्णा त्विन्यें रास्यो कृचा नुक्ती ति ॥ वें.मा. ११

भुक्त्वान्नं नस संयुक्तं सुप्तो भार्या समन्वितः॥३२९॥ ततः प्रभाते नाजेंद्र सुवासिन्यः सुनेश्वनं ॥ मज्जनं कानयामासुः गंधतैलैः सु निर्मलैः ॥ अन्योन्यं पूजनं तत्र अन्योन्य पनिनंभणं ॥ स नाजा विप्र मुख्यानां सुनाणां बहु भोजनं॥ स्त्रीणांच पुरुषाणांच बहुमान क्रमेण सः ॥ देवानांच ऋषीणांच नृपाणां मानुषात्मनां ॥३३२॥ अपूपान्विविधा न्दिव्या न्सूप शाका दिकांस्तथा ॥ घृतकुल्यं क्षीनकुल्यं दधिकुल्य मतः पनं ॥३३३॥ श्री निवासाय मंगळं ॥ श्रीः॥

भुक्त्वेति ॥ नस संयुक्तं ॥ गो क्षीन संयुक्तं अन्नं भुक्त्वा ॥ भार्या समन्वितः॥

 भार्याभ्यां लक्ष्मीपद्माभ्यां समन्वितः सुप्तः ॥ पयःफेननिभे ॥ अपर्यं 
कैकशयने सह ब्रह्मचर्येण निद्रामकरोत् ॥ तत इति ॥ ततः शुद्धदशम्यां 
अनंतरं अतिरिक्तदशम्याः प्रभाते उषसि ॥ सुरेश्वरं श्रीनिवासं ॥ सु
निर्मलैः नवैः सुगंधितैलैः सुवासिन्यः मज्जनमभ्यंगं कारयामासुः ॥
अन्योन्यमिति ॥ वनगृहस्थित ब्रह्मादि मानुषांतानां बंधुभोजनायु
पयानागतान् तोंडिमान वसुदान धनंजयादीन्वनगृहस्थिता इंद्रा
दयोऽभिगमनपरिवेषणपाणिपत्नीनासनवीजनगंधमाल्य
तांबूलफललड्डुकादिभिरुपचेरुः ॥ आहूता गतानां जन्यजा
नानां जनीजना अप्येवं इत्यन्यो न्येषां पूजनं परिवेषणं च प्रा
वर्त्तत इत्यर्थः सनाजेति सुराणां ब्रह्मरुद्रादीनां विप्रमुख्यानां
ब्रह्मर्षीणां एषां पुंसां स्त्रीणां च बहुमानक्रमेण गुणानुसारेण
चंद्रेण अमृतेन बहुभोजनं संपूर्णं भोजयामासेत्यर्थः ॥ देवाना
मिति ॥ देवानां ऋषीणां देवर्षीणां मानुषाणामनां नृपाणां मानु
षाणां नृपाणां च ॥ विविधानपूपान् पोल्यादि पिष्टकान् ॥ दिव्यान् ॥
देवेष्टान् सूपशाकादिकान् ॥ अग्निमुखेन तथा चक्रे ॥ संपूर्णं
भोजयामसेत्यर्थः ॥ ७ ॥ घृतकुल्यमिति ॥ अतः परं भोजनोत्त
रं पानकपानीये इक्षुरसाम्रकदल्यादि रसायनकुल्यं क्षीरकुल्यं
दधिकुल्यं स्नानमेय गणाकीर्णं चक्रे ॥ पायसानां गणैः तथा
तद्वत् आकीर्णं यथास्यात्तथा चक्रे इत्यर्थः ॥ अन्नेत्यं बोध्यं ॥
तथाहि ॥ श्रीमद्भोजनशाला मध्ये महान्महाजुसः ॥ भक्ष्य
कुट्टिमता ॥ तत्र शालायां शाल्योदनानां राशयः शुभ्रवस्त्राच्छ
न्नाः पूर्वतोपमाः सानस्काः ॥ तथा नानाविध भक्ष्य शाखादी
नां राशयोपि ॥ एवं पानक पानीयेक्षु रसाम्रकदल्यादि रसा
यन घृत क्षीर दधि तक्र सानाम्र सूप पायसाद्यं धरोद्भदोप
माः सघटीयंत्राः ॥ एवं विधस्य पाकस्थानस्य समंततो दिक्षु
विदिक्षूपदिक्षु च भोजनायामा असंहृता विरजाः समाभोजन
पङ्क्तयः ॥ एतासां पुनतः अनुच्छिष्ट संपर्काणि परिवेषण सु
करानि स्तिमितानि द्रोणायमानानि जातु दघ्नानि सपरि
वेष पात्राणि पूर्वोक्त पानकादि पायसांतानां कुल्यानि विश्व
कृतानि सौवर्णान्यासुः ॥

पु तथा मुख शोधन गंडूष पाणि पादप्रक्षालनार्थानि प्रवह-त्क्षुद्र जल वें.मा.
कुल्यान्यपि ॥ एवं विभव संपन्नायां शालायां सुनाशीनां भोजने ११
निवृत्ते फेनपात्राणां संमार्जनाय बहिः प्रक्षेपे कृते कुल्यान्यप्यं
संतु येन यदा बहिर्नि:सानितानि तदा सानमेयगणा नाहसगणा
श्चोच्छिष्टाशनाय संकीर्णाः इति ॥ एतत्सर्वं उद्दिश्य कानयितृ कर्तृ
भोक्तृ श्रीनिवास विवाहेंद्र विश्वकर्म देवादि माहात्म्या त्सर्य मासि
तार्थो कृपानुक भिद्धन्यांपेत्राश्रि-सो न्वेयमिति संक्षेपः ॥

एवं कोलाहलं चक्रे दिवारात्रि चतुनस्तथा ॥२३४॥

आसीन्तत्र विनोदश्च नित्य मंगळमेवच ॥
दिवसे पंचमे प्राप्ते कृत्वा ... नलिं नृप ॥ कलशांश्चतुन
स्तत्र दीपज्वाला विराजिता ॥ वधूवरौ प्रतिष्ठाप्य वन
सिंहासने नृप ॥२३५॥ पूजयामास गोविंदं जामातनम
नामयं ॥ आकाशराजो धर्मात्मा क्षीन प्राज्ञं करे ददौ (धौ) ॥
मातनं वासुदेवस्य नाजनबकुळमालिकां ॥ पूजयित्वा
विधानेन वस्त्रालंकान भूषणैः ॥ नाभिं क्षीनेण संयो
ज्य पुत्रीं पद्मावतीं नृपः ॥ अर्पयामास दुःखेन ब्रह्मण
स्तु महीपते ॥ महालक्ष्म्यो नाभिमूलं सघृतं क्षीन
सेचनं ॥ अर्पयामास पुत्रीं स्वां रुदतार्द्र कंठवान् ॥
श्रीनिवासस्य कृष्णस्य शेषाचल निवासिनः ॥ नाज
भार्या महाभागा रुदंती कुवनी यथा ॥ पुत्री हस्तं स्व
हस्तेन धृत्वा नाज कुलांगना ॥ क्षीनं संयोज्य कृष्णस्य
नाभिमूलेति दुःखिता ॥ जीवं रुदंति मंत्रेण दुःख
संदिग्ध लोचना ॥ पालितां लालितां पुत्रीं नवमास
धृतां मया ॥ त्वदधीनां जगन्नाथ करिष्ये मम नंदनां ॥
सतस्या नोदनं दृष्ट्वा नाजा दुःख पनायणः ॥ नत्नोद
दीन वदनः पुत्रीमालिंग्य भूपतिः ॥ हा पुत्री मंद
भाग्योहं त्वद्वियोगेन केवलं ॥

२पु.

ता पुत्रि मंद भाग्योहं त्वद्वियोगेन केवलं ॥ जीवनं मम क
ल्याणि न स्थिरंच भविष्यति ॥ क्रीडागृहं नागपुत्री तव
भोजन कर्मच ॥ भ्राता तव वनान्तेहे कथं क्रीडां करिष्यसि॥
एवं नरुदंत मालोक्य भ्रातरं दीन चेतसं ॥ तां द्रुमालो नृप
श्रेष्ठः दुःखितो वाक्य मब्रवीत् ॥ तां द्रुमानः ॥ वयं दरिद्रा
तिर्भाग्या स्त्वं हि भद्रे गमिष्यसि ॥ वयं मनसा मापन्ना
नाऽऽकार्यं विचारणा ॥ एतान्दृष्ट्वा महाराजः विष्वक्सेनोति
दुःखितः ॥ भगिनीं दीनवदना मालिंग्य प्ररुरोदमुहुः ॥
मातर्मे बालकं त्यक्त्वा यथालोभार्जितं धनं ॥ तथा मां
भगिनी हीनं कृत्वा गच्छसि भामिनि ॥ एवं प्रसंगस्तत्रा
सीद्बैवानामपि भूमिप ॥ ऋषीणां करयपादीनां दुःख
मत्यंत दारुणं ॥ नरुदंतं नृपतिं दृष्ट्वा श्रीनिवासः सतां
गतिः ॥ स्वयं नरुनोद गोविंदो भगिनीं पार्श्व वल्लभां ॥
स्मृत्वा श्री देवकी पुत्रस्तदद्भुत मिवा भवत् ॥ इत्थं
लौकिक कर्माणि रैनावत मुपागतः ॥ पद्मावत्या तथा
सार्द्धं सर्वबान्ध समन्वितः ॥ ग्रामं प्रदक्षिणीकृत्य नमा
नानायणावुभौ ॥ गरुड स्कंध मारूढौ पद्मासन भवा
दिकैः ॥३६६॥ आरुरोह वनारोह अन्योन्यं नर्तनं तथा ॥
पुनर्गृहं प्रवेश्याथ गमने च धुर्भवान्नृतिः ॥ श्वश्रूंच
श्वशुरं चैव साष्टांगं प्रणनामच ॥ आशीर्वादं तत
श्चक्रे जामातरमनामयं ॥ दीर्घायुर्भवगोविंद सर्व
लोक धुरंधर ॥ आशीर्भिरभिनंद्याथ वासुदेवमभा
षत ॥ धरणी ॥ मासांते गच्छ गोविंद वध्वा सह स्वकं
गृहं ॥ इदंते श्वाशुरं वाक्यं मानयस्व महामते ॥ सतस्या
वचनं श्रुत्वा वासुदेवोब्रवीन्नृप ॥ श्रीनिवासः ॥ नृपवाक्य
श्रृणुमम कार्यस्य महती त्वरा ॥ तस्मादाज्ञांच मे देहि
याजं स्ते स्या कृपामपि ॥ इत्युक्त्वा वासुदेवस्तु गरुडस्कंध
मारूहत् ॥ जगाम भवनं सार्धां सर्वदेवम न्वितः ॥
आकुलं व्याकुलं नम्यं पुनस्य जन संकुलं ॥ प्राकारगोपुरा
रूढाः पश्यंति स्म स्वरुगुषा ॥

भू.पु.

धन्या राज कुलोत्पन्ना सखी कमल लोचना॥ अनुगच्छति गोविंदं पश्य काल विपर्ययं॥ तदा ददौ महाराज यानि बहूनि श्रियः पतेः॥ तंडुलान् शालि संभूतान् वृषभाणां मधोपनि॥ आनीय्य चीन सङ्कीना न्द्विशतानि वियन्नृपः॥ गुड भानं समुद्भूतं तिं श्रिणी भान मेवच॥ पयोघट सहस्राणि दधि भांड शतानिच॥ सहस्रार्द्धं घृताक्तानि चर्म पात्राणि सर्षपान्॥ मेथिका न्हिंगु लवणं तैल पात्राणि पंचच॥ ददौ शर्कर संपूर्ण घटानां द्विशतं तथा॥ वार्ताक चूत कद्दू दध्री राजनं भा फला निच॥ कूश्मांड कंदमूलानि मधु भांड शतानिच॥ रंभा फलानि राजेंद्र पत्राणां निचयं तथा॥ अश्वानामयुतं दत्वा गजानांच सहस्रकं॥ धेनूनां पंच साहस्रं माविकानां शतं तथा॥ दासीनां द्विशतं राजन् त्रिशतं राजवर्णिणां॥ वस्त्राणि विविधान्याशु पर्यंकं रत्न भूषितां॥ उपबर्ह समोपेत मुपबर्हण संयुतं॥ एवमादीनि वस्तूनि गृहीत्वा नृपसत्तमः॥ पुत्रेण सहितो राजन् श्री निवास पनायण:॥ आकाशराजो धर्मात्मा: श्रीनिवासस्य सन्निधिं॥२६२॥ आगश्वशुरं दृष्ट्वा उत्थाय जगदीश्वरः॥ श्रीनिवासः॥ दूनाध्वातं महाराज किमर्थं गमनंकृतं॥ तातन्यं किं महाराज तव पुत्र समेनघ॥ कन्यां दत्वा शुभां --प्ते सुकृतं किं कृतं त्वया॥ संतोष मतुलं प्राप्तं मम तात न संशयः॥ किंते मनोगतं राजन् तत्समाचक्ष्व भूपते॥ संदेहं मा कुरुष्वात्र दाता दाने महीपते॥ वासुदेव वचः श्रुत्वा वासुदेव मभाषत॥ सर्वं संपूर्ण मस्माकं त्वत्प्रसादेन केशव॥ नान्यं याचे जगन्नाथ तव पादसरोरुहे॥ भक्तिं देह्यचलां कृष्ण सकुटुंबस्य मे नघ॥ तच्छ्रुत्वा वचनं तस्य यूनस्यच महात्मनः॥ दत्तवां स्तस्य सायुज्य माकाश नृपते स्तदा॥ शालकस्य ददौ वस्त्रं स्वांगस्थं मधुसूदनः॥ स जामात्रा भ्यनुज्ञातः पययौ ससुतः पुरीं॥ पुत्रि गमिष्ये नगरं विहरस्व हरिप्रिये॥ शयाते श्रीनिवासस्य शयनं कुरु मंगके॥

सांत्वयित्वा सुतां वीरः पुत्रीं कमललोचनां ॥ शासिता सा
स्वपित्राशु शीघ्रमाप रथं नृप ॥ नारदाद्यैश्च कंठेन
जगाम नगरं नृपः ॥ पद्मावत्यानुगो विंदो ब्रह्मरुद्रा
दिकैर्युतः ॥ सुवर्णमुखरीं प्राप तत्र वासमकल्पयत् ॥
देवान्संप्रेषयामास स्वधामानि वृषाकपिः ॥ ब्रह्मादीनां
सुराणां च मुनीनामूर्ध्वरेतसां ॥ ददौ वस्त्रं यथायोग्यं
भगवान्भक्तवत्सलः ॥ तेनाहूता जगद्धात्रा जग्मुः
स्वकं सुराः ॥ ऋषयश्च तपोरण्यं जग्मुर्वीणायणा
ह्वया ॥ लक्ष्मी जगाम राजेंद्र करवीरपुरं प्रति ॥
महोत्सवं तं त्वनुभूय देवता ब्रह्मेशपूर्वाः सहसाति
संभ्रमात् ॥ जग्मुः स्वकं धाम महानुभावा राजेंद्र
पूज्यं प्रशशंसुरादरात् ॥ गते देवगणे तत्र अगस्त्य
निलये हरिः ॥ भुंजानो भोगमतुलं तत्रास्ते भगवा
न्हरिः ॥ विवाहाध्यायमहिमां ये शृण्वंति जने
श्वर ॥ तेषां भाग्योदयं वक्ष्ये शृणु राजन्सविस्तरं ॥
कोटिकन्याप्रदानस्य यावद्भूमेः प्रदानतः ॥ यत्फलं
लभते देही तत्फलं श्रवणाल्लभेत् ॥ उत्सवं ये
करिष्यंति उत्सवे जगदीशितुः ॥ तस्योत्सवो भवे
द्राजन्वेंकटेश प्रसादतः ॥ इति ते कथितं राजन्वि
वाहचरितं हरेः ॥ शुभदं शृण्वतां राजन्सर्वेषां
मंगलप्रदम् ॥ २९६ ॥

इति श्री भविष्योत्तर पुराणे श्री वेङ्कटगिरि माहात्म्ये
श्री श्रीनिवास पद्मा कल्याण महोत्सव प्रशंसनं नामै
कादशोऽध्यायः ॥ श्री कृष्णार्पणमस्तु ॥ श्री हरये नमः ॥

॥ ॐ ॥

एवमिति ॥ चतुरः सर्वकार्यनिपुणो राजादिनानि शुद्धविद्ध वें.न
दशमी द्वादश्यात्मकानि त्रीणि दिनानि एवं कोलाहलं बहुगुणं ११
चक्रे ॥ कोलतं कोलः एकीभावः तं हलति भिनत्तीति कोलाहल।
इति कोशव्याख्यानात् ॥ आसीत्तत्र विनोद इति ॥ तत्र साधन
द्वादश्यां मध्याह्नादुपरि विनोदः क्षणमपि विश्लेषो भाभू
दिति संश्लिष्टयोः वस्तुनोः केनचित्कारणेन विश्लिष्टयोः
पुनः समागमकालपर्यंतमाभासेन विप्रलंभेन कालयापनं
विनोदः ॥ अत एवोक्तं विनोदो विनहयापनमिति ॥ सोप्यासी
त् ॥ अथ नित्यमंगलंच कल्याणवन पूजा ब्राह्मणादि सभा
पूजा मंगल नीराजना शीनादि नित्यं क्रियमाणं मंगलंचा
सीदित्यर्थः ॥ अत्रेत्थं बोध्यं ॥ तथाहि ॥ आकाशराजा एका
दश्यां रात्रौ विश्रांतः पत्न्यादिभ्यो लब्धमिष्टं निवेदय
न्नानंदयामास ॥ किमिति ॥ पद्मावा उचितवर लाभेन तस्या
योगचिंता परिहृता आसीत् ॥ शुभं शीघ्रं विधीयतामिति
विवाहविधानेन श्रीनिवासानुग्रहेणाच अकस्माद्गृहिनागतेन
वसंत वनागत किरात वृत्तांतेनास्य पूर्वकलत्र शंकया विघ्नोना
यातः ॥ अतो वयमस्मिन् जन्मनि धन्याः स्मः इति ॥ परंतु
स वृत्तांतः कदा बहिर्नायाति किंवा भविष्यति तन्मा भूत् ॥
एवमेव भूयात् इति क्षेमचिंतामात्रमव शिष्टं ॥ अयोनिजायाः
शीतामा हवानर्थ परंपरा मा भूत् ॥ अथ सर्व साक्षी श्रीनिवास.
नारदस्तमप्यातंकं परिहर्तुं पद्मां प्रेरयामास ॥ सा तेन प्रेरिता
राजकन्या किरातीयं नाम कपट नाटकं विषय.निगमणेन नारद
मुखेन कारयित्वा विश्वकर्म मुखेन चित्रयित्वाच विनोदार्थं नारद
मिश्रं लक्ष्मी पद्मे विवाहमंटपे उपविश्य नाटयामासतुः ॥ किं ततः
प्राप्तं श्रीनिवासस्य बालस्त्री ताडितत्वात्स्त्री जित इति स्यकृहय
इति च प्राप्तं ॥ अजित इति प्रवादमात्रं ॥ शुक नारदयोरनृत वादि
नौ इति ॥ बकुलयापि विद्यावान्धनवान्बलीति वरं स्तुत्वा तज्ज्ये
ष्ट पत्नीं अनपत्यां धात्यन्क लज्जेति विनिंद्य कन्यां घटयित्री
अनृत वादिनीति प्राप्त वनस्या धर्मणत्वात् ॥ ज्येष्ट पत्न्या निर्दु
ष्टत्वात् ॥ अतः श्रीनिवास शुक नारद बकुला लक्ष्मीनां यथा

संभवं कोपावेश इति च प्राप्तं ॥ एवं प्राप्ते सायाह्ने संध्यामु
पास्याग्निं हुत्वा वसिष्ठ शुक नारदैः बकुलमाचा सह होम
मंडप एव तस्थौ ॥ पद्मालक्ष्मीश्च विवाह मंटपे संभृत पूजा
संभारे श्रीनिवासागमनं निरीक्षंत्यौ स्तः ॥ सूत मागध वं
दिनः ॥ गंधर्वाप्सरसो वैणिकादय उत्सव प्रकृतयः उत्सवो
त्सुकः सभाजनाऽपि कुतो विलंब इति विचारितवंतः ॥ रा
जापि कुतो विलंब इति गुरुमुखाद्विचारितवान् ॥ अथ गुरुः
श्रीनिवास सन्निधिं गत्वा इंगितेन श्रीनिवासः कुतो वा विमना
इवा भाति मुख प्रसादो न दृश्यत इत्याह ॥ तच्छ्रुत्वा राजापि
पूर्वाशंकित किरात वृत्तांतातंकेन वालुकसेत्वंतर्गत जल इव
परिक्षीणो बभूव ॥ अथ धैर्यमालंब्य राज गुरुणा सह
वसिष्ठ शुक नारदादिभिः संभूय पुनर्विशेषतो विचारे नारद
मुखेन पद्मालक्ष्मीकृत नाटकादि वितोदोपलंभेन कोपो न
क्रोधो इति ज्ञातं ॥ अथ राजा जीवितमात्मानं मेने ॥ कस्मात् ॥
सोनर्थस्तावन्नागतः ॥ असदुपालंभ निमित्तः स्त्रीषु कोपः
प्रत्यायन पर्यंतः ॥ कथं चिन्निबर्हणीयो भवतीति ॥ पुनः पृष्टः
पुरुषो बभूव ॥ प्रत्युत शंकितानर्थ परिहारायायं कोपो दैवादा
गत इति भातीति ॥ अथ राजा पद्मायाः मध्यस्थो भूत्वा नारदं
पप्रच्छ ॥ नाटकादिषु नामग्रहण भावेन कुतः श्रीनिवासा
दीनां कोपावेश इति ॥ अथ नारदः ॥ श्रीनिवासस्य मध्यस्थो
भूत्वा स्वस्व कृतस्य स्वस्व साक्षि सिद्ध तयास्म स्मिन्स्वस्मि
न्स्वस्मि न्पर्यवसाय तेषां तेषां कोपावेश इत्याह ॥ तर्हि तत्सो
ढव्यमेव कुतः कोप इति राजा ॥ अथ नारदः ॥ साधोः परम
धार्मिकस्य राज्ञस्तवेक्षणिकया शंकेनापि प्रशांतं तत्सा
धुषु भूषणमपि सासूयेषु दूषणायितं ॥ राजा ॥ न हि रणा
जिनस्य संकोचः ॥ इदानीमपि परीक्षा भवत्विति पद्मावक्री
त्याह ॥ अथ तथास्त्विति श्रीनिवासेनोक्तेन विवाह दीक्षायां
तस्य ॥ वसन्त इत्याहुः ॥ तर्हि कः कोप शांत्युपाय इति राजा ॥
असदुपालंभ क्षमापनमेवेति नारदः ॥ तत्कीदृशमिति राजा
अपहृत हय प्रत्यर्पणं नवरत्नोपायनमाहृत्य सभामध्ये

शिनो वत मत मिलेवं दृक्‌द्वयात्मक मित्याह ॥ तानदः ॥ अथ नाजा पद्मामपृष्ट्वा स्वयमेव अन्यथा भूतस्य प्रत्यर्पणमशक्य मिति कर्कशा सह संप्रति निधातव्य मिति तौं द्विना सहात्वेचयामास तज्ज्ञातं वसुदानेन ॥ अथ नाजा नानदं प्रत्यालोचित माह ॥ अथ नानदः ॥ श्रीनिवासं पृष्ट्वा तथा प्रतिश्रुत्य सश्रीतुलस्युदक धानां श्रीनिवास वुरेत सिञ्चेत्याह ॥ अथ तथा कनेन्द्राजा ॥ एतन्मध्ये वसुदानः सें दिना पद्मामे आत्मोचितं विहापयामास ॥ अथ लक्ष्म्याह ॥ तन्नप्रति निधातव्यं ॥ अपनाध आसज्जते ॥ श्रीनिवासानूढस्य तस्य हयस्यान्यथा भावः कदा स्यात् ॥ मत्सहजो मत्सन्निधावस्थित मेव प्रत्यर्पयामीत्यादि ॥ अथ तच्छ्रुत्वा श्रीनिवासः पनम संतुष्टः महा ह्लाभो जातः सोपि प्रत्यर्पणीयः ॥ प्रतिश्रुतमपि देयमेव ॥ अन्यथा प्रतिश्रुत पनित्यागापन्ते नि ति नाजानं बोधयामासः ॥ एवमेकस्मिन्पाकाने व्यवस्थिते पद्मा ॥ अस्तुनामैतत् ॥ द्वितीयो नन्याय्यः ॥ शिलाप्रहान अतिक्रमातिच्यान शांति नऽपः ॥ तत्कथ मिति नानदः ॥ तत्रैव अतिक्रमो वृत्त इति पद्मा ॥ नानदः मृगयागतं पुरुषं निष्पुरुषैकांत प्रदेशेपि लोचन संहयादूप वनणां प्रतिवनणांच कृत्वा गांधर्वे विवाहे जाति स्त्रियस्य पनिग्रहे कोति क्रमः ॥ तस्माद्वितीयोपि न्याय्य एव ॥ तथा चोभय नऽपं क्षमापनं कर्त्तव्यमेव ॥ अहं शुकश्च नानृत वादिनौ ॥ श्रुत्यर्थानुवादित्वात् ॥ विवाहानृते पातकाभावाच्च ॥ बकुलापि नानृत वादिनी ॥ तद्वचनस्यार्थी तने तात्पर्यात् ॥ तच्चोपपादितं पुनस्तात् ॥ ७ ॥ अथ पद्मा लक्ष्मी स्वभावतो दृनितं ज्याव पि श्रीनिवासं किंचिदपनाध व्याजेन सभामध्ये प्रणंतुं पुनतो वसुदानशिनसा, विशाल स्वर्न पात्रे नवनत्नफल पुष्पोत्क नानुद्धार्य अलंकृते तं दयं गुंजामणिं च पार्श्वतः पुनस्कृत्य विवाह मंटपात्प्रतस्थतुः ॥ तदा देव दुंदुभयो नेदुः ॥ जगुर्गंधर्वाः ननृतुनप्सनसः पुष्पवृष्टिश्च खाच्चुता ॥ तदा ब्रह्मापि तत्समागम संदर्शनार्थं उन्मर्यादं ॥ किमुतान्ये सभाजनाः ॥ तदा ब्रह्मण्यपि मार्गा ज्जनानप सानयतां पद्मा लक्ष्मीचानाणां श्रीनिवास पदकांकित कृष्णाजिन प्रहान आपतितः ॥ कान्येषां मशक सदृचनाणां कथा ॥ एवं महोत्सवेन श्रीनिवासाधिष्ठितं होममंडपे प्रत्यागत्य दयं समर्प्य नत्नोपायनं पुनतो निधाय शिनोवनमतं चक्रतुः ॥

 अथ श्रीनिवासः पनम स्नेह विक्लिद्यमान हृदय उत्थायते उद्वाहो 
त्सवार्थं विवाह मंटपं प्रत्या जगामेति ॥ ततो नित्य मंगळं ॥ अथ 
राजा क्षेमेपि नितांतं को भूत्वाभि नंदं ॥ जनाश्च तस्मात् स्मात्
आनंद भरिता अभूवन् ॥ ७ ॥

पंचमांते पुनाणवचनानि ग्रंथांते लेखनीयानि भवंतीति लिखितं ·
तानि कानि चि लिख्यंते ॥ ७ ॥ स्वयं व्यक्त प्रदेशेषु श्वेत वनादि
षोडश स्थानेषु ॥ तत्र स्थाः प्रतिमाः सर्वा नराणामकृतात्मनां ॥
भक्तेन लोहेनैव शिलारूपेण दर्शिताः ॥१॥ चिदानंद ज्ञानीनं न
लोचने दृश्यते क्वचित् । कलौ युगे विशेषेण नयोग्यं द्रष्टुमात्मनः ॥२॥
चिदानंद ज्ञानी नाहं तत्र सन्निहितोस्म्यहं ॥ अपरेण ज्ञानीनेण चिदा
नंदेन पद्मज ॥३॥ तत्रैव प्रतिमा देशे स्थितोहं नित्य मंजसा ॥ कलौ
जनाः प्रपश्यंति प्रतिमां मदधिष्ठितां ॥ ४ ॥ (तस्मिन् नवयुगे ब्रह्मन्)
तस्मिन्नेव युगे ब्रह्मन् योगी मामेव पश्यति ॥ युगांतरे तथा मूढः प्रतिमा
मेव पश्यति ॥५॥ शुद्ध चेताः पुमांस्तत्र ज्ञानी मामेव पश्यति ।
पूजकाः देवताः सर्वे दर्वी भूता जाता इमे ॥६॥ प्राप्ते कलियुगे घोरे
स्वयं व्यक्त स्थलेष्वपि ॥ कुर्यां पाखंड भूयिष्ठं प्रत्ययार्थं सुन
द्विषां ॥७॥ य...देवी महालक्ष्मीं भोकादेवो जनार्दनः ॥ पनि...यान
का वसंत्येते देवा ब्रह्मादिकाऽपि ॥८॥ तस्मादेतेषु स्थानेषु नैवे
द्यं नैव दृष्यत इत्यादि ॥ वनादि षड्विंशो ध्याये ॥ सं धाव पि कलौ
चैव वेङ्कटेशस्य वर्तनं ॥ ततः पन मियाभेदो मौनं तत्रैव च
स्थितिः ॥ अर्चावतारं वक्ष्याति नराणां मांस चक्षुषां । वैकुंठादा
गतं दिव्यं विमानं तु तिरोहितं ॥ विमान मात्रं तु कलौ कान मिष्यति
मानवाः ॥ अर्चावतारं इत्येवं वदिष्यंति विमोहिताः ॥ तथैवा
नुमतिं केचिल्लक्ष्यंति कलौ युगे ॥ साक्षात्पश्यति तत्सर्वम
पश्यन्तिव तिष्ठति ॥ साक्षाद्भाषण मेकं तु नास्ति तस्य तपोधनाः ॥
परं तु सर्वमस्त्येव निग्रहानुग्रहावधि ॥ अधिकं वनदानं तु
भविष्यति कलौ युगे ॥ इति ॥ ९ ॥

अत्रैवाग्रे ॥ अप्राकृतः ॥ स्वर्ण सानुरपि श्री वेंकटाचलः ॥
प्राकृताचल वद्भूमौ भविष्यति कलौ युगे ॥ ७ ॥ ब्राह्मे तृतीये ॥
पुरा शंखो महाराजः सूर्य वंशोद्भवो विभुः ॥ साक्षात्कृत्य महा

भ.पु विष्णुं याचेहं वनमुत्तमं ॥ यावच्चंद्रश्च सूर्यश्च यावत्तिष्ठति वें.मा

मेदिनी ॥ तावत्तिष्ठतु मे सेवा कृता विष्णो मया विभो ॥ इति ११.

संचिंत्य मनसा नाज्ये पुत्रं निधायच ॥ गत्वा वसिष्ठं पप्रच्छ यत्र विष्णुः प्रसीदति ॥ इति पृष्टः वसिष्ठः प्राह ॥ वेंकटाचलेऽगस्त्यस्तपस्यति तेन सह तपस्तप्त्वा विभुं पश्यसीत्युपविष्टः तत्र गत्वा मुनिना सह ॥ तपस्तप्त्वा ध्याने आविर्भूतं हरिं कृष्ण ययाचे वनमुत्तमं ॥ यावच्चंद्रश्चेत्यादेव ॥ इत्युक्तो भगवानाह शृणु भूप वचो मम ॥ अर्चाविग्रहरूपोहं सच्चिदानंदविग्रहः ॥ स्वयं व्यक्त प्रदेशेषु दृश्यो ब्रह्मादियोगिनां ॥ तामेव प्रतिमां केचिदजानन्नृषिपुंगवाः ॥ ततस्तेनापि वाऽयोग्यं दर्शनं मे कलौ युगे ॥ युगेष्वपि च सर्वेषु दुर्दर्शं यत्कुयोगिनां ॥ तद्रूप सन्निधानाय स्यादृश्य हान हेतवे ॥ विमानं च शिलादारुकाष्ठेष्टकमयं कुरु ॥ प्रतिमां च शिलादारु तां पश्यंति कुयोगिनः ॥ रूपद्वयं प्रपश्यंति ज्ञानिनो ब्रह्मवित्तमाः ॥ भानुमान्भानुभिर्यद्वद्रसग्राही यथा भुवः ॥ साक्षात्पूजाश्रयो नित्यं शिलाबिंबात नेत्राच ॥ यथा दृष्टं विमानं ते मद्रूपं पुरुषर्षभ ॥ तथा कुरु महाभाग तेनते भविता गतिः ॥ इत्युक्त्वांतर्दधे देवः ॥ तेनोक्त मार्गेण विधाय पुण्यं विमानवर्यं प्रतिमां च पुण्यां ॥ प्रख्याप्य भूपो जनलोकसंघे जगाम विष्णोः पदमव्ययं शुभं इति ॥छ॥

अत्रैव षष्ठेऽध्याये ॥ दर्शयन्भक्त वात्सल्यं यो दद्दौ हस्तगौ शुभौ ॥ चक्रशंखौ नृपेंद्राय चक्रवर्तीति तं विदुः ॥ अत एवानि शंखाभ्यां हीनौ तौ दृश्यते करौ ॥ अर्चारूप शिलारूप विग्रहस्य महात्मनः ॥ दिलीपः ॥ कोयं नृपश्चक्रवर्ती तन्मे ब्रूहि महामुने ॥ दुर्वासाः ॥ पुना द्विजवरो वैखानसो धृतवर्मा गोपालरूपं द्रष्टुं पंचविंशति तमे कलौ वैवस्वतांतरे तपस्तप्त्वा तं साक्षाच्चक्रे ॥ तत्रैव वैखानस गोत्रो नाम्ना वैखानसः कश्चिद्द्विजस्तं साक्षात्कर्तुं अयमपि चोळदेशे भूतदीतीरे तपश्चक्रे ॥ तस्मै प्रसन्नः कृष्णः स्वप्ने वेंकटशैलं व्रज तत्र ते सिद्धिर्भवतीत्याह ॥ पुन स्वप्नांतरे जगाद ॥ पुना कृतयुगे पश्चात्काले शंखन वैकृतं ॥ विमानं कल्प पूजया नष्टप्रायमभूद्द्विज ॥ वल्मीकस्यांतरे

भ.पु. विष्णोः प्रतिमा वर्तते शुभा ॥ शंखेन निर्मिता पुण्या सद्रूपर्चा वें.मा.
स्वनुपिणः । जानुमात्रे निमग्नास्ति तिंत्रिणी वृक्ष मूलतः ॥ दास ११
नाम्ना च शूद्रेण सहतं पूजय प्रभुं ॥ त्वदागमन कालेतु पद्मदेशा
त्सदा शुचिः ॥ रंग दासोति विख्यातः शूद्रस्त्वां संगमिष्यति ॥
उभाभ्यां पूजितो देव इष्ट सिद्धिं प्रयच्छति ॥ एतावदुक्त्वा स्व
प्नेच गोपी नाथेति नामच ॥ ददौ तस्य प्रियो विष्णुः सोपि
बुध्वाति विस्मितः ॥ प्रीत्या जगाम शैलेंद्रं सोपि शूद्रः समागतः ॥
तिंत्रिणी मूल संभूत वल्मीकस्थं हरिं परं ॥ उद्धृत्य पश्चिमे
भागे स्थापयामासतुः पुनः ॥ अशिल्पि कुशलाभिश्च शिला
भिर्भित्तिमंजसा ॥ कृत्वा तदंतरे नम्यं तृणैः कृत्वा तु मंटपं ॥
भूतीर्थ पुष्करिण्योर्मध्ये पुष्पोद्यानं शूद्रश्चकार ॥ एवं काले गते
गंधर्वक्रीडा प्रसंगेना नवस्थित मतेः शूद्रस्याशनीन वाष्पा देहे
त्यक्त्वा नारायण पुरे जातस्य तोंडिमानिति नामाभूत् ॥ स तोंडि
मानो राजा बिरुद्वानेण वेंकटाचलं गत्वा प्रत्यहं तमर्चयन्नास
स मंडलाधिपति रुनये ददौ ॥ प्राकार द्वय गोपुर द्वय युतं गर्भ
गृह सहितं सनंगमंटपं समहान संयागा गार धान्यागार गो
शालादि सहितं देव धाम कारयामास ॥ एवं सप्त विंशति तमे
कलौ बहुप्रकारेण पूजयतः कर्म वशादीशेच्छया बलवद्भिः
दस्युभिः पराजये विरुद्वानेण सगम्य पादौ प्रणम्य रुदं
स्माहीत्युवाच तं प्राहार्चारूपी श्रीनिवासः ॥ मा भैष पुत्र भद्रंते
चक्र शंखौ ददामिते ॥ ततो विजयी देवं वमं ययाचे ॥ ममायुध
प्रदानस्य ख्यात्यै देवोत्तम प्रभो ॥ अर्चा बिंबे शिला बिंबे
शंख चक्रौ न धारय ॥ इत्यादि वचनानि संति ॥ एतेषां वचनानां
परिशीलने यथाधिकार मिष्ट सिद्धिर्भवतीति सर्वमत वर्यं ॥
श्री श्रीनिवासाय मंगलं ॥ शुभाभि वर्द्धतां ॥ एवमेतत्पुनावृत्त
माख्यानं भद्रमस्तुवः ॥ प्रख्यापनत विश्रब्धं बलं विष्णोः
प्रवर्द्धतां ॥ कल्याणाद्भुत गात्राय कामितार्थ प्रदायिने ॥ श्रीम
द्वेंकट नाथाय श्रीनिवासाय ते नमः ॥ श्रीः ॥ ॐ कोंड पात्र स्वे
शालोकैर्नंदैः सुशोभितः ॥ काशतां कोंड दीपोयं यावदा
तानकं ॥ ॐ श्रीः ॥ गोत्र कोंडो नाक पुत्रः वेंकटस्नेह सं

भ.पु. किरातादि दशः पद्मा लोकोयं कांड दीपकः ॥ वें.म
ज्वाला नृकेसरि क्षेत्र वासिना बुध बंधुना ॥ १२.
पुनाण यात्रा पांथाना मुपकृत्यै प्रबोधितः ॥ श्रीः ॥

ॐ इति श्री मद्भविष्योत्तर पुनाण वेंकट गिरि माहात्म्य
व्याख्याने पादीन्मध्य मलांतादि नृसिंहार्य प्रकाशिते
श्री कल्याण कांड दीपे पद्मालोकानोहणं नामैकाधिक
दशमोऽध्यायः ॥
॥ श्री वेङ्कटेशाय मङ्गलं ॥
श्री नृसिंहार्य गुर्वाज्ञां कृष्णाख्यः शिरसा वहन् ॥
समूल कल्याण कांडदीपं भक्त्या लिखच्छ्रियै ॥
नेत्रेभ सप्तेंदु मिते शाके वै रौद्र हायने ॥ सहः शुद्ध त्रयोदश्यां
लेखनं पूर्णतामगात् ॥ श्री कृष्णार्पणमस्तु ॥ श्रीः ॥ श्रीः ॥

मुद्रिका श्रीनिवासाचार्य.
शा। श। १९०० बालगानु ॥
॥ कालयुक्ति संवत्सरद ज्येष्ठ शुद्ध २ बुधवार ॥

# ಪುಸ್ತಕಗಳು ದೊರೆಯುವ ಸ್ಥಳ

1. **ವೇದಾಂತ ಬುಕ್ ಹೌಸ್**
   ಅಪ್ಪುರಾವ್ ಸ್ಟ್ರೀಟ್, 6ನೇ ಮುಖ್ಯ ರಸ್ತೆ,
   ಚಾಮರಾಜಪೇಟೆ, ಬೆಂಗಳೂರು – 560 018
   ದೂರವಾಣಿ: 26507590

2. **ಪೂಜ ಬುಕ್ ಹೌಸ್**
   ನಂ. 64, ಪಾರ್ವತಿ ಭವನ
   6ನೇ ಮುಖ್ಯರಸ್ತೆ, ಅಪ್ಪುರಾವ್ ಸ್ಟ್ರೀಟ್,
   ಚಾಮರಾಜಪೇಟೆ, ಬೆಂಗಳೂರು – 560 018
   ದೂರವಾಣಿ: 9900384329

3. **ವಂದನಾ ಬುಕ್ ಹೌಸ್**
   24/1 ನರಸಿಂಹರಾಜ ಕಾಲೋನಿ,
   4ನೇ ಮುಖ್ಯರಸ್ತೆ, 9ನೇ ಅಡ್ಡ ರಸ್ತೆ
   ಬೆಂಗಳೂರು – 560 019
   ದೂರವಾಣಿ: 25928136, 26770826

4. **ಶ್ರೀ ಎಸ್. ಹರೀಷ್, ಪುಸ್ತಕ ವ್ಯಾಪಾರಿಗಳು**
   ಎಸ್.ಎಲ್.ವಿ. ಸ್ವಾಮಿ ದೇವಸ್ಥಾನ
   ವಿ.ವಿ. ಮೊಹಲ್ಲಾ, ಮೈಸೂರು.
   ದೂರವಾಣಿ: 9845748586

5. **ಎಸ್. ಮುರಳೀಧರ್**
   ಶ್ರೀ ಕೃಷ್ಣಧಾಮ ಪೂಜ ಪುಸ್ತಕ ಭಂಡಾರ
   ಸರಸ್ವತೀಪುರಂ, ಮೈಸೂರು

6. **ಶ್ರೀಮತಿ ಶೈಲಜಾ ಚಂದ್ರಶೇಖರ್**
   ಗುರುರಾಘವೇಂದ್ರ ಪೂಜ ಪುಸ್ತಕ ಭಂಡಾರ
   ಶೆಟ್ಟಿಹಳ್ಳಿ ಗೇಟ್ ಹತ್ತಿರ, ತುಮಕೂರು.

# ನಮ್ಮ ಪ್ರಕಾಶನದ ಗ್ರಂಥಗಳು

1) ಖಂಡನತ್ರಯ (ಕನ್ನಡ ಅನುವಾದ) ಮುಗಿದಿದೆ.

2) ಮಣಿಮಂಜರಿ ಛಲಾರಿ ವ್ಯಾಖ್ಯಾನಸಹಿತ
ಅನುವಾದಕರು: ವಿದ್ವಾನ್ ಕೆ. ಸತ್ಯನಾರಾಯಣಾಚಾರ್ 75=00

3) ಶ್ರೀ ಹನುಮದ್ವಿಲಾಸ ಶ್ರೀ ತಿಪ್ಪಣ್ಣಾರ್ಯಕೃತ 40=00

4) ಪ್ರಮಾಣ ಚಂದ್ರಿಕ, ಕನ್ನಡಕ್ಕೆ
ಅನುವಾದಕರು: ಪಂ. ಅಶ್ವತ್ಥ ನಾರಾಯಣಾಚಾರ್ ಪೂರ್ಣಯ್ಯ 90=00

5) ಶ್ರೀ ಪುರುಷಸೂಕ್ತ – ಟಿಪ್ಪಣಿ ಸಹಿತ 50=00

6) ಶ್ರೀ ವೆಂಕಟೇಶ ಮಹಾತ್ಮ ಹುಲಿಮುನಿ ಆಚಾರ್ಯ
ಕೃತ ಟಿಪ್ಪಣಿ (ದೇವನಾಗರಿಯಲ್ಲಿ) 200=00

(ಅಂಚೆ ವೆಚ್ಚ ಪ್ರತ್ಯೇಕ)